तृतीयं दूषयति—नान्त्य इति। अन्त्यो नियमविधिर्नास्तीत्यन्वयः। तत्र हेतुमाह—नियमजेति। नियमादृष्टस्य कल्पकाभावात्। अवघातादौ तु नियमादृष्टजन्यपरमापूर्वमेवैतत्कल्पकम्। न च ब्रह्मज्ञानमदृष्टजन्यं केवलव्यतिरेकाभावादित्यर्थः। अव्यतिरेकत इति छेदः॥ ३८॥

**न हि सत्यपि वेदान्तश्रवणादौ न दृश्यते।**
**अदृष्टाभावदोषेण ब्रह्मज्ञानसमुद्भवः॥ ३९॥**

व्यतिरेकाभावमुपपादयति—नहीति। नहि वेदान्तश्रवणादौ सत्यनियमादृष्टाभावमात्रापराधेन ब्रह्मज्ञानानुत्पत्तिर्दृष्टचरीत्यर्थः॥ ३९॥

**कथञ्चित्तत्त्वबोधस्यादृष्टजन्यत्वमिच्छताम्।**
**विधिर्भाष्यविरुद्धोऽयं स विधिस्तैर्निराकृतः॥ ४०॥**

तदङ्गीकारे सम्प्रदायविरोध इत्याह—कथञ्चिदिति। ज्ञानस्य कथञ्चिददृष्टजन्यत्वेऽप्ययं विधिर्भाष्यविरुद्धः। समन्वयसूत्रव्याख्यावसरे महता प्रयत्नेन तैर्भाष्यकृद्भिः स विधिः श्रवणज्ञानविधिर्निराकृत इत्यर्थः॥ ४०॥

**अन्यथा निगमान्तानां वाक्यभेदस्त आपतेत्।**
**ब्रह्मात्मैक्यपरत्वेन विधिनिष्ठतया तथा॥ ४१॥**

विपक्षे बाधकान्तरमप्याह—अन्यथेति। श्रवणविध्यङ्गीकारे वेदान्तानां विधिपरत्वं ब्रह्मपरत्वञ्चेति वाक्यभेदप्रसङ्ग इत्यर्थः॥ ४१॥

**तस्मान्नास्ति विधिः कश्चिच्छ्रवणादाविति स्फु**
**एवं प्राप्ते समाधानं सम्यगत्राऽभिधीयते ॥**

पूर्वपक्षमुपसंहरति—तस्मादिति । यस्मात्पूर्वोक्तरीत्या विरोधस्तस्माच्छ्रवणे विधिर्नास्तीत्यर्थः । एवं पूर्वपक्षे प्राप्ते समा जानीते—एवमिति ॥ ४२ ॥

**तावददृष्टफलस्यापि धर्मज्ञानस्य साधने ।**
**अर्वाचीनपुमर्थस्य स्वीकृतोऽध्ययने विधिः ॥**
**किमुत्कृष्टपुमर्थस्य साक्षात्कारस्य सूचितः ।**
**साधने श्रवणे वाच्यं विधिरस्तीति सर्वथा ॥**

श्रवणे विधिं कैमुत्येन साधयति—तावदिति द्वाभ्याम् । स्यापि धर्मज्ञानस्य साधनेऽध्ययने नियमविधिस्तावदङ्गी यदा त्वर्वाचीनपुरुषार्थे परोक्षे धर्मज्ञानेऽप्येवं तदा किमु व परमपुरुषार्थब्रह्मसाक्षात्कारसाधने श्रवणे नियमविधिरिति योजना ॥ ४३—४४ ॥

**कल्पकं यदि यागीयापूर्वं नियमजं विधिः ।**
**अध्ययने तदा ब्रह्मज्ञानं तत्कल्पकं श्रुतौ ॥**

उभयत्र कल्पकसाम्यमप्यस्तीत्याह—कल्पकमिति । नियमादृष्टजन्यं यागीयापूर्वं तत्कल्पकं स्यात्तर्हि श्रुतौ श्रवण ज्ञानं तत्कल्पकमस्त्विति योजना ॥ ४५ ॥

**समस्तादृष्टजन्यत्वं ब्रह्मज्ञानस्य सम्मतम् ।**
**सर्वकर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ॥**

ब्रह्मज्ञानस्यादृष्टजन्यत्वं प्रमाणारूढं करोति—समस्तेति ॥ ४६ ॥

अत्र सर्वपदेनोक्तं यागाद्युत्थमदृष्टकम् ।
अदृष्टं श्रवणाद्युत्थमखिलञ्चेति निर्णयः ॥ ४७ ॥

समस्तादृष्टजन्यत्वं ब्रह्मज्ञानस्य कथमनेन वाक्येन प्रतिपाद्यते इत्यत आह—अत्रेति । अत्र भगवद्गीताचतुर्थाध्यायस्य वाक्ये प्रसिद्धयागादीनेवापेक्ष्य सर्वग्रहणमिति भ्रमं व्युदस्य श्रवणादेरपि संग्रहायैवाखिलमित्युक्तम्, अन्यथा पौनरुक्त्यादिति तात्पर्यार्थः ॥ ४७ ॥

योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ४८ ॥

वेदाध्ययने स्मृत्युक्तप्रत्यवायान्यथानुपपत्तिरपि तत्कल्पिकेति वैषम्यं शङ्कते—य इति सार्द्धेन ॥ ४८ ॥

इत्येवं प्रत्यवायञ्चेदपेक्ष्याऽत्र विधिर्मतः ।
तथैव प्रकृतेऽप्यस्तु निन्दा ह्यकरणे श्रुतेः ॥ ४९ ॥

तदाश्रवणेऽपि प्रत्यवायस्मृत्यन्यथानुपपत्तिस्तत्कल्पिकाऽस्त्विति साम्येन समाधत्ते—तथैवेति सार्द्धेन । हि यस्मात्स्मृतौ श्रुतेः श्रवणस्याप्यकरणे निन्दा श्रूयत इत्यर्थः ॥ ४९ ॥

नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।
वर्त्तमानस्तु संन्यासी पतत्येव न संशयः ॥ ५० ॥

स्मृतिवाक्यमुदाहरति—नित्यमिति ॥ ५० ॥

ननु ब्रह्मात्मतत्त्वस्य निर्विशेषतया नहि।
तज्ज्ञानहेतुता प्राप्तिरन्यतः श्रवणं विना॥

नियमासम्भवं शङ्कते—नन्विति। ब्रह्मज्ञाने श्रवणं व्यतिरेकादीनां नास्ति साधनभावप्राप्तिः, निर्विशेषस्य ब्रह्मणः समधिगम्यत्वात्। तत्कथं नियमसिद्धिः, पक्षान्तरे प्राप्त्यर्थः॥ ५१॥

मैवं यथाऽवघातेऽस्ति नियमः श्रवणे तथा।
विनापि पाक्षिकीं प्राप्तिमस्तु वाप्यत्र न क्षतिः
व्रीहीनित्यत्र शास्त्रैकगम्यापूर्वीययोगिषु।
अन्यतो दलनादेश्चाप्राप्तावप्युच्यते तथा॥

समाधत्ते—मैवमिति। व्रीहीनवहन्तीत्यत्र शास्त्रैक... व्रीहिष्वन्यतो दलनाद्यप्राप्तावप्यवघाते यथा नियमः, तथा पाक्षिकत्वमन्तरेणैव नियमोऽस्तु, तत्र न काचिदनुपपत्तिरिति योजना॥ ५२—५३॥

अथ सामान्यरूपेण तत्र प्राप्तिमपेक्ष्य चेत्
व्रीहिमात्रेऽस्ति नियमस्तदत्रापि समं तदा॥
व्रीहिमात्रसमाकारस्तत्र यद्वत्तथाऽत्र च।
विषयज्ञानमात्रेऽस्ति सामान्याकारसम्भवः॥

प्रकारान्तरेऽपि साम्यमाह—अथेति। अथ व्रीहिमात्राकारेण प्राप्तिमपेक्ष्य तत्र नियमस्तदत्रापि समानं विषयज्ञानाकारस्याकारस्य सुवचत्वादिति द्वयोर्योजना॥ ५४—५५॥

अथाऽपूर्वविधिस्तत्र फलतो नियमो भवेत् ।
श्रवणेऽपि तथा तर्हि फलतः स भविष्यति ॥ ५६ ॥

प्रकारान्तरेऽपि साम्यमाह—अथेति। अथावघातेऽपूर्वविधिरेव सन् फलतो नियम इति व्यवह्रियेत श्रवणेऽपि तथा भविष्यतीति साम्यम्॥५६॥

न च भाष्यविरोधोऽपि तत्त्वज्ञाने विधिर्यतः ।
निराकृतो न चान्यत्र श्रवणे ज्ञानसाधने ॥ ५७ ॥

सम्प्रदायविरोधं परिहरति—न चेति ॥ ५७ ॥

सति ज्ञानविधाने हि प्रकृतिप्रत्ययावुभौ ।
प्रत्ययार्थं सह ब्रूतः प्राधान्येनेति शास्त्रतः ॥ ५८॥
प्राधान्यात्प्रत्ययार्थस्य नियोगस्यैव सर्वथा ।
प्रकृत्यर्थतया ब्रह्मदर्शनस्य च गौणता ॥ ५९ ॥
तद्विशेषणभूतस्य ब्रह्मणः सुतरां भवेत् ।
गौणत्वं न ततो ब्रह्म सिद्ध्येद्वेदान्तवाक्यतः॥ ६० ॥

ननु तैरपि किमर्थं ज्ञाने विधिर्निराकृत इत्यत आह—सतीत्यादिभिः । "दर्शनविधाने हि प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येन" इति न्यायेन प्रत्ययार्थस्य नियोगस्यैव प्राधान्याद्, दर्शनस्य प्रकृत्यर्थतया गुणभूतत्वेन तद्विशेषणस्य ब्रह्मणोऽपि सुतरां गुणभावः स्यात्ततो न वेदान्तैर्ब्रह्म सिद्धेरदिति त्रयाणां योजना ॥ ५८—६० ॥

ब्रह्मदर्शनमुद्दिश्य प्रधानफलभावतः ।
श्रवणादि विधाने तु न दोषः स्यान्मनागपि ॥ ६१ ॥

श्रवणे तदङ्गीकारे तु न काचित्क्षतिरित्याह—ब्रह्मेति। [illegible] ब्रह्मदर्शनमुद्दिश्य श्रवणादिविधाने तु न कोऽपि दोष इति योजना [illegible]

**यज्ञेनेत्यादिवाक्येऽपि ज्ञानार्थं तद्विधिर्मतः [illegible]**
**विधिस्तु धारणेऽपूर्वत्वादित्यत्र च तान्त्रिकाः [illegible]**

नन्वेवमुपक्रमोपसंहाराभ्यामात्मतत्त्वप्रतिपादनपरे [illegible] कथमवान्तरवाक्यैः श्रवणादिविधानं कल्प्यते वाक्यभेदप्र[illegible] शङ्क्य वाक्यभेदश्च किमेकदेशिनाऽऽपाद्यते ? किं वा [illegible] इति विकल्प्याद्यं प्रत्याह—यज्ञेनेति। वेदान्तेऽप्यवान्तर[illegible] "विविदिषन्ति यज्ञेन" (बृ० ४।४।२२) इत्यत्र ज्ञानसाधनत्वं [illegible] विध्यङ्गीकारादित्यर्थः। द्वितीयं प्रत्याह—विधिस्त्विति। [illegible] होत्रप्रकरणे "अधस्तात्समिधं धारयन्ननुद्रवेद्" इत्यधो [illegible] योपरि हि देवेभ्यो धारयतीति पठितम्। तत्र दैविकमुपरि[illegible] प्रकरणमध्ये श्रुतमपि विधेयमिति विधिस्तु धारणेऽपूर्वत्वा[illegible] निर्णीतत्वादित्यर्थः ॥ ६२ ॥

**तिस्रो रात्रीर्व्रतं कुर्यादितिवत्प्रकृतेऽस्तु [illegible]**
**का हानिस्तव वक्तव्यमिति निर्दूषणं मतम् [illegible]**

अथ कथञ्चिदेतदधिकरणं प्रभाकरो नाङ्गीकुर्यात्त प्रति[illegible] न्तरमाह—तिस्र इति। दर्शपूर्णमासप्रकरणे "तिस्रो रात्रीः [illegible] इति रजस्वलाया व्रतकलापविधिमङ्गीकरोत्येव प्रभाकरः। [illegible] प्रकरणेऽपि श्रवणं विधीयतां का तव हानिस्तत्र वक्तव्य[illegible] शेषः। इतीत्यतो हेतोर्मन्मतं निर्दूषणम्। "यत्रोभयोः [illegible] परिहारश्च तत्समः" इति न्यायेनास्मन्मते त्वया दूषणं [illegible] शक्यमिति भावः ॥ ६३ ॥

**यद्यर्हार्थतया तव्यप्रत्ययस्य समन्वयात् ।**
**न विधानार्थता तर्हि वचनान्तरतो भवेत् ॥ ६४ ॥**

अथ तत्रापि तवापरितोषश्चेत्तर्हि प्रकारान्तरं शृण्वित्याह—दीति । यदि रजस्वलाव्रतकलापस्य प्रकरणान्वयासम्भवादगत्या क्यभेदाश्रयणम् । इह तु तव्यप्रत्ययस्यार्हार्थत्वेनाप्यन्वयसम्भवान्न युक्तमिति तर्हि वचनान्तरेण भवेदित्यर्थः ॥ ६४ ॥

**पाण्डित्यं ब्राह्मणस्तस्मान्निर्विद्येत्यादिवेदगीः ।**
**भवतु श्रवणादीनामविवादाद्विधायिका ॥ ६५ ॥**

**तच्छ्रुतेर्गीरनारभ्याऽधीतत्वेन न केनचित् ।**
**विरुद्ध्यते विधिस्तस्मान्निर्दुष्टः श्रवणादिके ॥ ६६ ॥**

वचनान्तरमाह—पाण्डित्यमिति । "तस्माद् ब्राह्मणः पाण्डित्यं र्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" बृ० ३ । ५ । १ ) इति वाक्यं श्रवणादिविधायकमस्तु, तस्यानारभ्या-तत्वेनोक्तविरोधाभावात् । तस्माच्छ्रवणादौ विधिनिर्दुष्ट एवेति द्धमित्यर्थः । यस्माद् ब्रह्मभावः परमपुरुषार्थस्तस्माद् ब्रह्मबुभूपुरुप-पत्तात्पर्य्यनिर्णयरूपं पाण्डित्यं निःशेषेण सम्पाद्य बालवन्नोरागद्वेष-न युक्तोऽसम्भावनानिराकरणाय युक्तीरनुचिन्तयन्नवस्थातुमिच्छेत् । ः पाण्डित्यबाल्ये निःशेषेण सम्पाद्याऽथ मुनिर्निदिध्यासनं कुर्यादिति त्यर्थः ॥ ६५—६६ ॥

**यद्यप्यापाततस्तत्र श्रवणादि न भासते ।**
**विचारे क्रियमाणे तु तत्परत्वं हि लभ्यते ॥ ६७ ॥**

ननु तत्र पाण्डित्यादिशब्दैः कथं श्रवणादिविधानुनरुक्त-
कत्वात्तेषामिति तत्राह—यदीति। आपाततः श्रवणात्स्माच्
वाक्यार्थपर्यालोचने वाक्यस्य श्रवणादिविधिपरत्वं त्तिरि
इत्यर्थः ॥ ६७ ॥

पाण्डित्यबाल्ययोरर्थः सूत्रकारेण वर्णितः।
सहकार्यन्तरेत्यत्र मौनस्यापि विधानतः॥६

एतदेव विशदयति—पाण्डित्येति। सूत्रकारेणैव "स
विधिः पक्षेण तृतीयं तद्वतो विध्यादिवद्" (ब्र० सू० ३।४।
करणे पाण्डित्यशब्दिते श्रवणे बाल्यशब्दितमननसहिते
वत्कृत्याथ मुनिरिति वाक्यशेषे निदिध्यासनरूपत्वेन मौनस्य
कारिणो विधिप्रतिपादनादसाम्प्रदायिकत्वं दूरापास्तमित्यर्थः
श्रवणमननवतः पुंसः पक्षेण कृतोपास्तिपुरुषापेक्षया वि
निदिध्यासनसंज्ञमात्मज्ञानार्थं मुनिशब्दवाच्यं सहकार्यन्तरं
श्रवणादाविव मौनेऽपि विधिरस्तीति सूत्रार्थः ॥ ६८ ॥

विधौ तव्यस्मृतेर्वाक्यभेदेनान्यत्र तद्विधेः।
श्रवणे द्विर्विधिर्वाऽस्तु श्रोतव्य इति तद्वि

नन्वेवमप्यधीतस्वाध्यायमध्येऽवगतस्य 'श्रोतव्यः' इत्य
धेरनुपपत्तिस्तद्वस्थैवेत्याशङ्क्याह—विधाविति। तव्यप्र
वपि स्मरणात् "तद्विजिज्ञासस्व" इत्यादिषु समानप्रकरणे
ष्ववश्यं वाक्यभेदेन विधेरङ्गीकर्त्तव्यतया त्वदपरितोषस्य वि
न चैकस्यामेव शाखायां "श्रोतव्यः" "पाण्डित्यं निर्वि
श्रवणविधिद्वयं पुनरुक्तमिति वाच्यम्, एकत्र विधायापर
विशेषकथनाद्। द्विः श्रवणविधिर्वाऽस्तु। अथवा, यथा मैत्रे

यावन्नुनरुक्तमेकस्योपसंहाररूपत्वात् । तथा द्विःकृत्वः श्रवणविधिर्भवतु । श्रवणं तस्माच्छ्रोतव्य इति स्थले विधेरुपपन्नत्वमिति शेषः । न काचिदत्रानुपपत्तिरिति भावः ॥ ६९ ॥

**तस्माच्छ्रुतिस्मृतिन्यायसंसिद्धः श्रवणे विधिः ।**
**निर्दोष इति तत्त्वैक्यपरिज्ञानफलावधिः ॥ ७० ॥**

श्रवणविधिमुपसंहरति—तस्मादिति ॥ ७० ॥

**आत्मदर्शनकामेन विरक्तेन मुमुक्षुणा ।**
**आत्मा वेदान्तवाक्येभ्यो द्रष्टव्य इति शास्त्रतः ॥ ७१**

**श्रोतव्यो गुरुमाश्रित्य मन्तव्योऽध्येय आदरात् ।**
**ततो ज्ञानान्महामोहः सकार्यो विनिवर्त्तते ॥ ७२ ॥**

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" ( बृ० ४ । ५ । ६ ) इत्यत्र श्रवणविधिप्रतिपादने फलितमाह—आत्मेति द्वाभ्याम् । 'द्रष्टव्यः' इति शास्त्रान्मुक्तिमिच्छता विरक्तेनाधिकारिणा मुक्तिहेतुभूतात्मदर्शनकामेन गुरुमाचार्य्यमाश्रित्य गुरूपसदनविधिना वेदान्तवाक्येभ्य आत्मा आदरादत्यन्तभक्तिश्रद्धापुरःसरं श्रोतव्यः, आदरान्मन्तव्यः, आदराद् ध्येयो निदिध्यासितव्य इति । आदरादिति स्थलत्रयेऽप्यनुपज्यते । ततः किमित्यत आह—तत इति ॥ ७१—७२ ॥

**आत्माऽविद्योद्भवं बन्धं प्रमातृत्वादिविभ्रमम् ।**
**आत्मविद्या समुत्पन्ना समूलं बाधतेऽञ्जसा ॥ ७३ ॥**

ननु प्रमातृत्वादिबन्धस्य सत्यत्वेनानुभूयमानत्वात् कथं तस्याज्ञानमात्रं विरोधिना तत्त्वज्ञानेन विनिवृत्तिः ? इत्याशङ्क्य बन्धस्याज्ञान-

कार्यतया तत्त्वज्ञानेन तन्निवृत्तौ स्थित्ययोगादित्याशयेनाह— घेति ॥ ७३ ॥

**आत्माऽविद्याविवर्त्तोऽयं प्रमातृत्वादिवि-**
**तत्राद्योऽयमहङ्काराध्यासः प्रत्यक्चिदात्म-**

ननु प्रमातृत्वादेरात्मधर्मत्वेन प्रतीयमानत्वात् कथं... त्वम् ? इत्याशङ्क्याह—आत्माऽविद्येति । अतात्त्विको... विवर्त्तः। तथा च निर्धर्मकस्यात्मनः प्रमातृत्वादेरविद्याविवर्त्तत्वे... धर्मधर्मिभावःतत्प्रतीतेर्भ्रान्तिमात्रशरीरतया न तेन निर्धर्मक... भावः। प्रमातृत्वाद्यध्यासस्य सर्वानर्थबीजत्वप्रदर्शनाय तदा... राध्यासमाह—तत्रेति। तत्र प्रमातृत्वाद्यध्यासेषु मध्ये... त्मनि मूलाविद्याधिष्ठानत्वेन तदुपहितचैतन्ये आद्योऽयं... त्वेन प्रसिद्धः सकलकार्याध्यासापेक्षया प्रथमोऽहङ्कारोऽह... हमिति प्रत्ययश्च तस्याध्यासोऽतस्मिंस्तद्बुद्धिरूप इत्यर्थः॥...

**ततः प्राणेन्द्रियादीनां स ततः संसृतिर्दृढा।**
**अनादिवासनाजालैर्वृतो जीवोऽत्र सज्जते।**

तत इति। ततोऽहङ्काराध्यासानन्तरमहङ्कारोपहिते... दीनां स चाध्यासः। नह्यहङ्कारप्राणेन्द्रियादीन्यात्म... प्रमातृत्वादिव्यवहारः केवलचैतन्ये सम्भवति। ततः... ध्यासात् संसृतिः जननमरणप्रवाहलक्षणा दृढा तत्त्वज्ञान... च्छेद्या। संसृतिदार्ढ्यहेतुमाह—अनादीति। अध्यास... तन्मूलवासनानामप्यनादित्वम्। जालशब्दः समूहव... बन्धनसाधनजालवचनश्च। वासनानामानन्त्याच्चदा... संसृतौ सज्जते आसक्ततया निमग्नो भवतीत्यर्थः॥ ७४॥

तत्र साधनसम्पन्नः शुद्धान्तःकरणः पुमान् ।
श्रवणादौ प्रवृत्तः सन् स्वज्ञानं लभतेऽञ्जसा ॥ ७६ ॥

एवमविद्यामूलकाध्यासकार्यसंसृतिं प्रदर्श्य तन्निवृत्तिप्रकारं संक्षेपेण दर्शयति—तत्रेति । तत्राऽनादौ संसृतिप्रवाहे कश्चित्पुण्यपुञ्जैः पुमान् लब्धाधिकारिशरीरः सुकृतपरिपाकेन शुद्धान्तःकरणस्तत्फलसाधनचतुष्टयसम्पन्नः श्रवणादौ तत्त्वज्ञानसाधने प्रवृत्तः सन्नञ्जसा भगवत्प्रसादादनायासेन स्वस्य ब्रह्मात्मैक्यतत्त्वस्य ज्ञानं साक्षात्कारात्मकं लभत इति योजना ॥ ७६ ॥

तत्त्वज्ञाने समुत्पन्ने सकार्याज्ञानबाधनात् ।
जीवन्मुक्तो निजानन्दे तिष्ठत्युज्झितसंसृतिः ॥ ७७ ॥

ततः किमित्यत आह—तत्त्वज्ञान इति ॥ ७७ ॥

तस्मादध्यासमूलस्वाज्ञानबाधोपपत्तये ।
आचार्याश्रयणेनात्माऽन्वेष्टव्यः श्रवणादिभिः ॥७८॥

प्रकृतमुपसंहरति—तस्मादिति । यस्मादज्ञानमूलकोऽनर्थस्तस्मादध्यासमूलभूतात्माज्ञानबाधस्योपपत्तिः सिद्धिर्यस्मात्तत्त्वदर्शनात्तदर्थम् 'आचार्यवान्पुरुषो वेद' ( छा० ६ । १४ । २ ) इत्यादिशास्त्रादाचार्याधीनात्मज्ञानोत्पत्तिः । तस्मात्तदाश्रयणेन सेवादिनाऽनुकूलाचरणेनाभिमुखीकृत्य तमाचार्यं ततः श्रवणादिभिरात्मज्ञानसाधनैरात्माऽन्वेष्टव्यो विचारेणान्विष्य ज्ञातव्य इत्यर्थः ॥ ७८ ॥

श्रवणमननसिद्धब्रह्मविद्यार्कभासा
भ्रमतिमिरमशेषं नाशयित्वा समूलम् ।

निरवधिसुखसिन्धौ यत्कृपालेशयोगाद्
विहरति सुविपश्चित्तं प्रपद्ये मुकुन्दं

इति प्रत्यक्तत्त्वचिन्तामणौ द्वितीयं प्रकरणं सम्पूर्णम् ॥२

ससाधनमात्मज्ञानमीश्वरप्रसादाधीनं तत्प्रसादश्च ... त्वेनैव लभ्यस्तदर्थं तमेवानन्यशरणत्वेनाश्रयेदिति मुमुक्षु स्वयमाश्रयति—श्रवणेति । यत्कृपालेशयोगाच्छ्रवणमनना... ब्रह्मविद्यार्कभासा समूलभ्रमतिमिरं मिथ्याज्ञानध्वान्त... बाधित्वा सुविपश्चित् सम्यक्तत्त्वज्ञानी निरवधिसुखसिन्धौ आनन्दसमुद्रे विहरति क्रीडति, "आत्मक्रीड आत्मरतिः" (... २५ । २ ) इत्यादिश्रुतेः । तं मुकुन्दं मुक्तिदातृत्वेन प्रसि... श्रीकृष्णं प्रपद्ये शरणं व्रजामीति योजना ॥ ७९ ॥

शरण्यादिगुणाधारं सारं सारविदां वरम् ।
चिदानन्दघनाकारं वारं वारं हरिं नुमः ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्द...
त्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभा...
धायां श्रवणविधिमयूखाभिधं द्वितीयं प्रकरणं
समाप्तिमगमत् ॥ २ ॥

---

## अथ तृतीयं प्रकरणम्

अचिन्त्यरूपाय वचोतिगाय
ब्रह्मादिवन्द्याङ्घ्रिसरोरुहाय ।
दृश्यातिगायाऽद्वयचित्सुखाय
नमो मुकुन्दाय रमाश्रिताय ॥ १ ॥

यं श्रीमन्तमुपासते मुनिगणा ब्रह्मादिदेवा रमा
वेदान्ताः समपोह्य दृश्यमखिलं यस्मिन्प्रतिष्ठां गताः ।
आश्रित्यामलबोधगोचरमजं यं मुक्तिभाजो भवन्
हीना अप्यखिलैर्गुणैर्व्रजपतेरङ्के गतं तं भजे ॥ १ ॥
नन्दनन्दनमानन्दमानन्दप्रदमद्भुतम् ।
आनन्दाय सदा वन्दे नन्दाङ्कगतमादरात् ॥ २ ॥

अतीतानन्तरप्रकरणे "श्रवणादिभिरात्मान्वेष्टव्यः" इत्युक्तं तत्र माणभावाभावाभ्यामनिष्टत्वापादनशङ्कानिराकरणेनात्मनः स्वप्रकाशत्व-पपादयितुं प्रकरणान्तरमारभमाणः स्वेष्टदेवतानमस्कारव्याजेन प्रकरण-तिपाद्यमर्थं सङ्क्षिप्य दर्शयति—अचिन्त्यरूपायेत्यादिपद्यद्वयेन । "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" (तै० २।९) "यन्मनसा मनुते" (तै० २।५) "यद्वाचानभ्युदितम्" (तै० २।४) आदिश्रुतिसिद्धवाङ्मनसगोचरातीतस्वरूपाय मुकुन्दाय नमोऽस्त्वि-ति सम्बन्धः । तत्र हेतुः—दृश्यातिगायेति । दृश्यं दर्शनकर्मार्हं-विद्यातत्कार्यवर्गश्च तदतिक्रान्ताय । ततो जातिगुणक्रियाविशेषणादि-च्यचिन्त्यधर्मातीतत्वात्तथाभूताय नमः—प्रह्वीभावोऽस्तु । ननु

तथाभूतस्य नमस्कार्यत्वमपि कथमिति तत्राह—मुकुन्दा
भूतोऽपि भक्तानुग्रहाय प्रादुःकृतानन्तकल्याणगुणगणालङ्कृ
नवधिकसौन्दर्य्यमाधुर्य्यसौष्ठवपारावारलीलाविग्रहो भ
नमस्कार्य्य इत्यर्थः। तस्य नमस्कार्य्यत्वमत्यन्तप्रसिद्ध
ब्रह्मादीति। तथा च द्रष्टृत्वादिगुणकैरीश्वरत्वेन ब्रो
वन्दनीयपदारविन्दत्वान्नमस्कार्यो भगवान्मुकुन्द इत्यर्थः
विग्रहं भगवन्तं विशिनष्टि—रमाश्रितायेति। रमा ब्र
स्तयाऽऽलिङ्गिताय। तथा च ब्रह्मविद्यारूपरमाशक्त्याऽऽ
लीलाविग्रहप्रदर्शनं भगवता क्रियते भक्तानुग्रहायेत्यर्थः।
विग्रहो भगवान् किंस्वरूप इत्यत्राह—अद्वयचित्सुखायेति
द्वैतवर्जितं यच्चित्सुखं स्वज्योतिरानन्दस्तद्रूप एव लीलाविग्रहो
कुन्दस्तस्मै नमोऽस्त्वित्यर्थः ॥ १ ॥

मानातिगायानुभवैकधाम्ने
मानप्रकाशाय पुमर्थसीम्ने
सर्वोत्तमध्येयमहामहिम्ने
श्रीमाधवायास्तु नमो विभूम्ने ॥ २

एवं सामान्यतः शास्त्रप्रमेयमुक्त्वा प्रारिप्सितप्रकरण
प्रमेयं सूत्रयति—मानातिगायेति। सर्वप्रमाणातीतायेत्य
प्रमाणातीतस्य कथमनुभव इत्यत आह—अनुभवैक
अनुभव एवैकं मुख्यं धाम प्रकाशस्तद्रूपायेत्यर्थः। नहि
रूपोऽनुभवान्तरमपेक्षतेऽनवस्थापातादिति भावः। यद्वा,
मसाधारणं धाम निवासभूमिस्तद्रूपाय। तथा च सर्वानु
वस्तुनोऽतिरिक्तस्यानुभवस्याभावात् कथं तदपेक्षेति भावः
भवजनकानि प्रत्यक्षादीनि प्रमाणानि किमिति स एव सर्वानु

ति तत्राह—मानप्रकाशायेति । प्रमात्राद्यधिष्ठानत्वेन प्रमाणप्रकाशो ात्तस्मै । नहि साक्षिचैतन्यमृते प्रमाणानां स्वतोऽनुभवजनने क्तिः, प्रमाणशब्दवाच्यानां वृत्तिविशेषाणां जडत्वात् । ततस्तदारूढं तन्यमेवानुभवजनकमिति भावः । ननु प्रमाणादिभासकत्वेन सिद्धस्यात्मनः सुखादिभिन्नतया पुमर्थत्वाभावात् कथं नमस्कार्यत्वम् ? यत आह—पुमर्थसीम्ने इति । "न स पुनरावर्त्तते" ( छा० ८ । । १ ) इति श्रुत्या तस्यैव परमपुरुषार्थत्वेन निश्चितत्वात् पुरुषार्थत्वं त्रैव पर्यवसन्नमित्यर्थः । तत्र हेतुमाह—विभूम्ने इति । विगतो मा यस्माद्—यमपेक्ष्यान्यो भूमा नास्तीत्यर्थः । "यत्र नान्यत् यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" (छा० ७ । २४ । १) ो वै भूमा तत्सुखं नाल्पे सुखम्" ( छा० ७ । २३ । १ ) इत्यादि तिसिद्धापरिच्छिन्नसुखस्वरूपस्य विभूम्नो ब्रह्मण एव पुमर्थसीमत्वमिति वः । नन्वविद्यादिप्रतिबन्धसत्त्वे कथं पुमर्थसीमत्वेन तस्य ज्ञानमिति ाह—श्रीमाधवायेति । श्रिया ब्रह्मविद्यया मां मायाशक्तिं सर्व-ामोहकर्त्रीं धुनोति भक्तानामिति श्रीमाधवः । यद्वा, मा वेदान्तजा ा तस्या धवः पतिः साक्षादनायासेन भक्तेभ्यो दातृत्वेन स्वामीति धवः ।

"मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवः स्वामीति शब्दितः ॥"

इति हरिवंशे श्रीरुद्रवाक्यम् । श्रीमांश्चासौ माधवश्च स च ै श्रीमाधवाय नमः—प्रह्वीभावोऽस्तु । तथा च तत्त्वज्ञानदाने-ऽविद्यातत्कार्यमपबाध्य पुमर्थसीमत्वेन स्वरूप एव सन् स्वभक्तानां ामेव भगवानाविर्भवतीत्यर्थः । अत एव सर्वोत्तमैः शिवविरञ्च्या-भिः सद्भिर्ध्येयोऽवश्यं ध्यातव्यो महामहिमा उदारमाहात्म्यं यस्य ै । तथा च मुकुन्दमाधवादिशब्दवाच्यात्मतत्त्वमेव सर्ववेदान्त-पाद्यत्वेन शास्त्रप्रमेयम्, तदेवात्र प्रतिपाद्यते इति भावः ॥ २ ॥

अखण्डमात्मानमुदारबोधं
सुखामृतं सत्यमशेषहेतुम् ।
प्रमाणमेयादिविभागशून्यं
धिया विदित्वैति नरो विमोक्षम् ।

सूत्रितमर्थं विवरीतुमादौ यथोक्तात्मतत्त्वज्ञानेनैव दे-
त्याह—अखण्डमिति । स्वगतादिभेदशून्यमात्मानं धिया वेद-
प्रमारूपान्तःकरणवृत्त्या विदित्वा अयमहमस्मीति साक्षा-
धिकारी विमोक्षमेति प्राप्नोतीत्यन्वयः । तस्य परमपु-
सुखामृतमिति । सुखञ्च तदमृतञ्च तत् । तथा च दुःखा-
क्षितं सुखमेवामृतं मोक्षो न केवलतार्किकाभिमतदुः-
तात्पर्यार्थः । तस्याबाध्यत्वमाह—सत्यमिति । आ-
माह—उदारबोधमिति । अपरिच्छिन्नज्ञानघनमित्यर्थः ।
वत्त्वमाह—प्रमाणेत्यादि । निर्विषयज्ञानस्वरूपत्वादपरि-
प्रपञ्चंप्रत्यभिन्ननिमित्तोपादानकारणत्वमपि तस्यैवेत्याह-
मिति । तथा च यथोक्तप्रत्यगभिन्नसर्वाधिष्ठानभूत-
तत्त्वज्ञानं मोक्षसाधनमिति भावः ॥ ३ ॥

ननूक्तरूपे परमात्मतत्त्वे
प्रमाणमस्त्यत्र न वाऽस्ति चेत्तत् ।
तदा परिच्छेद्यतया जड़त्वा-
दनात्मतात्मन्यवभास्यभावात् ॥

अथात्मनः स्वप्रकाशतयैव सिद्धत्वं वाऽनात्मघटादि-
सिद्धिकत्वमिति साधयितुं पूर्वपक्षमुत्थापयति—नन्विति

रमात्मतत्त्वे प्रमाणमस्ति ? न वा ? अस्ति चेत्तर्हि प्रमाणप्रकाश्य- न जडत्वादनात्मताऽऽत्मनि स्यादिति योजना ॥ ४ ॥

न चेत्प्रमाणं परमात्मनीष्टं
तदाऽनृतत्वाच्छशशृङ्गकल्पः ।
स्यात् प्रत्यगात्मा यत इष्यते न
प्रमाणशून्यस्य च सत्त्वमीषत् ॥ ५ ॥

न चेदिति । एतद्दोषपरिहाराय तत्र प्रमाणं नेष्टं चेत्, तवेति शेषः । रा प्रमाणरहितस्यानृतत्वादलीकत्वात् शशविषाणतुल्य एव प्रत्यगात्मा ात् । कुतः ? इत्यत आह—यत इति । यस्मात्प्रमाणशून्यस्य । ऽप्यर्थे । ईषदपि सत्त्वं नेष्यते प्रामाणिकैरिति शेषः ॥ ५ ॥

भवेत्तवोक्तं यदि मानशून्य-
तयाऽऽत्मनः स्यादनृतत्वमस्य ।
किमर्थमात्माऽयमपेक्षते त-
त्प्रमाणमेतद्वद युक्तियुक्तम् ॥ ६ ॥

स्वप्रकाशतयैव सिद्धे प्रत्यक्तत्त्वे न त्वदुक्तविकल्पावकाशइति वक्तुं द्धान्ती भूमिकामारचयति—भवेदिति । त्वदुक्तविकल्पावकाश- दा भवेद्, यद्यस्य नित्यापरोक्षरूपस्यात्मनो मानशून्यतया स्याद- कत्वम् । तदेवातिदुर्घटम् । अयमात्मा किमर्थं तत्प्रमाणं लोकसिद्ध- णशब्दवाच्यमपेक्षते ? त्वमेतन्मत्पृष्टस्योत्तरं युक्तियुक्तं वदेति जना ॥ ६ ॥

स्वरूपलाभाय किमात्मनो वा
प्रतीतये मानमपेक्षतेऽयम् ।

न तावदाद्यो यत आत्मनोऽस्य
स्वरूपतो नित्यतयाऽनपेक्षा ॥ ७ ॥

आत्मनः प्रमाणानपेक्षतामुपपादयितुं विकल्पयति—
आत्मनः स्वरूपलाभायायमात्मा प्रमाणमपेक्षते ? उताहो
तये ? न तावदाद्यः, यतोऽस्यात्मनः स्वरूपेण नित्यत्वा
क्षाविरहादित्यर्थः ॥ ७ ॥

अकार्य्य आत्माऽयमनन्त इष्टो
मानानपेक्षाऽस्य सदैव सत्ता ।
न वा प्रमाणं जनकं कदाचि-
न्निजप्रमेयस्य भवेन्न दृष्टम् ॥ ८ ॥

एतदेवोपपादयति—अकार्य्य इति । अयमात्मा अ
इष्टः श्रुतीनामिति शेषः । उत्पत्तिनाशशून्यः, अतोऽस्य
प्रमाणाकाङ्क्षावर्जिता । नहि कालत्रयेऽप्यबाध्यस्यात्म
प्रमाणाधीनेति वचः युक्तिसहम् । न वा प्रमाणं स्वप्रमेय
जनकं भवेत् । न वा तथा क्वचिद् दृष्टमिति योजना ॥ ८

प्रतीतये चेदिदमात्मतत्त्वं
ह्यपेक्षते मानमसङ्गवस्तु ।
तदा विचार्य्यं किमु मानतन्त्रं
प्रतीतिमात्रं जडभानमाहो ॥ ९ ॥

स्वप्रतीत्यर्थं प्रमाणमपेक्षते इति पक्षं विकल्पयति—
प्रतीतिमात्रं प्रमाणाधीनं जडभानञ्चेति ( वेति ? ) ॥ ९ ॥

आद्ये प्रमाणोऽपि तदास्ति वाच्यं
मानान्तरं ते तदभाव एतत्।
मृषात्मकत्वाच्छशशृङ्गकल्पं
स्वमेयसिद्धौ च कथं क्षमेत ॥ १० ॥

अन्त्ये दोषाभावान्न कदाचित् क्षतिरिति तदुपेक्ष्य प्रथममतिप्रसङ्गेन दूषयति—आद्य इति। तदभावे प्रमाणान्तराभावे एतत्प्रमाणं मृषात्मकत्वाच्छशविषाणतुल्यं ततश्च स्वप्रमेयसाधने कथं समर्थः स्यादित्यर्थः ॥ १० ॥

मानान्तराङ्गीकृतितः प्रमाणे
तवानवस्थेतरथा न सिद्धिः।
अथ प्रमाणं निरपेक्षमेव
स्वमेयसिद्धौ क्षमते स्वभानम् ॥ ११ ॥

अपेक्षतां तर्हि प्रमाणं स्वप्रसिद्धये प्रमाणान्तरमिति नेत्याह—मानान्तराङ्गीकृतित इति। इतरथा तदनङ्गीकारे न प्रमाणसिद्धिरित्यर्थः। अथ प्रमाणं स्वभानं स्वप्रकाशमन्यनिरपेक्षमेव स्वप्रमेयसिद्धौ क्षमते ॥ ११ ॥

स्वयंप्रकाशस्य न चास्त्यपेक्षा
प्रदीपवत्स्वव्यवहारसिद्धौ।
न वा स्वमेयव्यवहारसिद्धौ
मानस्य मानान्तरतो व्यपेक्षा ॥ १२ ॥

एतदेव पूर्वपक्षमुखेनोपपादयति—स्वयमिति सार्द्धेन। स्वप्रकाशस्यान्यनिरपेक्षत्वमेव नहीत्यादिना दृढीकृतमिति द्रष्टव्यम् ॥ १२ ॥

नहि प्रमाणं खलु साधकं सत्*
स्वसिद्धयेऽप्यन्यदपेक्षते यत्।
इतीष्यते चेच्छृणु भोः समाधिं
स्वयंप्रकाशं यदि मानमेवम् ॥१३॥

एवं पूर्वपक्षमनूद्य समाधत्ते—इतीति। तथा च
प्रमाणाधीनमिति सासहं त्वया त्यक्तव्यमिति भावः ॥ १३ ॥

हन्ताऽस्य विश्वस्य तदाऽखिलस्य
प्रमाणमेयात्मन आसमन्तात्।
यः साधकः प्रत्यगयं कथं स्यात्
स्वाधीनमानेन हि सिद्ध एषः ॥१४॥

आत्मनः स्वभानेऽन्यानपेक्षत्वं कैमुत्येन साधयति—हन्तेति
अनुमतौ। स्वप्रकाशस्य स्वभासनेऽन्यानपेक्षत्वमिति यदुक्तं
नुमतिरस्तीत्यर्थः। प्रमाणप्रमेयादिरूपस्य समस्तस्य
प्रत्यगात्मा सर्वतः स्वसत्तास्फूर्तिदानेनावभासकः स एव
केन कथं हि सिद्धः स्यादिति योजना ॥ १४ ॥

मानप्रवृत्तेः स पुरा चिदद्वयः
प्रमातृरूपोऽखिलसाक्षिरूपधृक्।
सिद्धोऽन्यथा मानमसिद्धमातृकं
स्वरूपमेवापि कथं लभेत तत् ॥१५॥

---

* तदिति पाठः साधु प्रतीयते।

प्रमाणप्रवृत्तेः प्रागात्मनः प्रमातृसाक्षिरूपेण सिद्धत्वादपि न तदपेक्षेत्याह—मानेति । विपक्षे बाधकमाह—अन्यथेति । प्रमाणप्रवृत्तेः प्रागात्मनोऽसिद्धत्वेन पूर्वसिद्धः प्रमाता यस्य तत्प्रमाणं स्वरूपमेव कथं लभेत ? न हि प्रमातृसिद्धिमन्तरेण प्रमाणशरीरं सम्भवतीत्यर्थः ॥ १५ ॥

सर्वस्य मातारमिदं प्रमाण-
मात्मानमेकं विषयं प्रकर्त्तुम् ।
क्षमं कथं स्यादपि कर्मकर्त्तृ-
विरोधतोऽन्यस्य न मातृता वा ॥ १६ ॥

आत्मनस्तदपेक्षत्वे युक्तिविरोधमाह—सर्वस्येति । इदं प्रमाणं कर्तृ सर्वस्य प्रमातारमात्मानमेकं स्वव्यतिरिक्तप्रमातृशून्यं कर्मतया कथं विषयीकर्त्तुं क्षमं स्यात् ? नहि विषयिणं प्रत्यक्षं दीपवत्स्वप्रकाशं घटादिवद्विषयभूतं प्रमाणं विषयीकर्त्तुं क्षमते इत्यर्थः । किञ्च, आत्मनि प्रमाणप्रवृत्तौ प्रमाता किमात्मैव ? किं वाऽनात्मा ? आद्यं दूषयति—कर्मेति । एकदैव गुणप्रधानभावो विषयविषयिभावेनैकस्मिन् विरुद्ध इत्यर्थः । द्वितीयं दूषयति—अन्यस्येति । अनात्मनो जडत्वादेव प्रमातृत्वानुपपत्तिरित्यर्थः ॥ १६ ॥

येनात्मना मानमुखप्रपञ्चः
प्रसिद्धिमायाति चराचरात्मा ।
तस्याऽस्य सिद्धौ यदि मानवाञ्छा
भवेत्तदाहो मतिवैभवं तत् ॥ १७ ॥

प्रमाणमन्तरा कथमात्मसिद्धिरिति वदन्तं प्रत्युपहसति—येनेति ॥ १७ ॥

तथा च भातुः स्वत एव चित्त्वात्
सिद्धत्वमस्त्यात्मन आन्तरस्य।
न चास्त्यलीकत्वमपि प्रमाणा-
भावान्नृशृङ्गादिवदस्य विष्णोः॥

फलितमाह—तथा चेति ॥ १८ ॥

किञ्चात्मनोऽसत्त्वमनात्मना किं
विज्ञायते वाऽऽत्मचिता न चाद्यः।
अनात्मनो ज्ञातृतया न चान्त्यो
व्याघातदोषादपि साधुरस्ति ॥ १९

एवं प्रमाणाभावमात्रेणात्मनोऽसत्त्वापादनं निराकृत्य ... णादात्मनोऽसत्त्वस्य सिद्धिपक्षं दूषयितुं विकल्पयति— ... अज्ञातृतयेति च्छेदः। ज्ञेयैकस्वभावत्वादनात्मन इत्यर्थः॥

आत्मा स्वसत्तासमये स्वकीयं
किं वेत्त्यसत्त्वं किमसत्त्वकाले।
आद्ये स्वसत्तासमये कुतः स्याऽ-
सत्ता तथा चाऽत्र किमेष विद्यात्।

व्याघातदोषादित्युक्तं हेतुं विवृणोति—आत्मेति। ... द्विषयस्यैवाभावात् ॥ २० ॥

स्वासत्त्वकाले कथमेव विद्या-
त्स्वस्याप्यभावात् क्व च कस्य बोधः

न चात्मनोऽसत्त्वमपि प्रवक्तुं
शक्यं कृतादेः क्षयमुख्यदोषात् ॥ २१ ॥

स्वेति । स्वस्यापि ज्ञातुरात्मन इत्यर्थः । क्व कस्मिन् विषये च ज्ञाता स्यादित्यर्थः । कृतादेः क्षयमुख्यदोषात् कृतहान्यकृताभ्यागमादिदोषप्रसङ्गादित्यर्थः ॥ २१ ॥

किञ्चात्मनोऽसत्त्वमतिः स्वमेव
निराकरोत्येव परात्मकं वा ।
आद्ये निराकर्त्तुरसत्त्वमस्ति
सत्यो निराकार्य इतः स आत्मा ॥ २२ ॥

किञ्चेत्यादिपद्यद्वयं निगदव्याख्यातम् । निराकर्त्तुरसत्त्वे निराकार्यस्यात्मनो निराकरणाभावे ह्यत एव सत्यत्वं सिद्धमित्यर्थः ॥ २२ ॥

अन्त्ये निराकर्त्तुरिहात्मभावात्
कुतोऽस्त्यसत्त्वं परमात्मनोऽस्य ।
श्रुतिः स्वसत्तादिकवेदिनोर्हि
वदत्यसत्त्वञ्च तथैव सत्त्वम् ॥ २३ ॥

स्वसत्त्ववेदिनः सत्त्वं वदति स्वासत्त्ववेदिनोऽसत्त्वं वदति श्रुतिः "असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो विदुः ।" ( तै० २।६ ) इति ॥ २३ ॥

किञ्च प्रमाणं सति गोचरे वा
प्रवर्त्तते वाऽसति चेद् द्वितीयः ।

तदा प्रमाणं क्षमते नृशृङ्गं
सामर्थ्यवत्साधयितुं मते ते ॥२

प्रमाणाधीना वस्तुसत्तेति कोऽर्थः ? किं सति प्र
जायते ? ज्ञायते वा ? तत्राद्यं निराकर्त्तुं विकल्पयति
तत्र द्वेधा विकल्प्यान्त्यमतिप्रसङ्गेन दूषयति—तदेवि॥

सत्येव चेत्तर्हि न वस्तुसत्ता
प्रमाणसाध्या स्वत एव सिद्धा।
प्रमेयसत्ताऽभ्युपगम्यते हि
मानप्रवृत्तेः स्वत एव पूर्वम् ॥

आद्यं प्रत्याह—सत्येवेति ॥ २५ ॥

यद्यस्ति भानं सत एव माना-
यत्तं मतं वस्तुन एतदस्तु।
अभानरूपे जडवस्तुनीत्थं
न भानरूपे स्वयमात्मनीह ॥ २

वस्तुसत्ता सति प्रमाणे ज्ञायते इति पक्षे समाधान
सत एव वस्तुनो भानं मानाधीनं यदि तेऽभिमतं,
जडवस्तुनि एतदस्तु। इह स्वयंभानरूपे आत्मनि
स्यादित्यर्थः ॥ २६ ॥

तमेव भान्तं ह्यनुभाति सर्वं
तस्यैव भासा सकलं विभाति।

इति श्रुतेः स्वात्मपदं प्रकाश-
स्वभावतो मानमपेक्षते नो ॥ २७ ॥

तत्र श्रुतिं प्रमाणयति—तमेवेति ।

"न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति" (मु०२।२।१०) इति श्रुतेः ।

"न तद्भासयते सूर्यो न शशाङ्को न पावकः" (गी० १५ । ६) स्मृतिश्चात्मनः स्वप्रकाशत्वे प्रमाणमित्यर्थः ॥ २७ ॥

किञ्च प्रमाणं किमिहात्मनीत्थं
पृच्छन्तमज्ञं प्रतिवाच्यमेवम् ।
सर्वाणि मानानि चिदात्मनीति
ह्यज्ञातभावाद्विषयश्चिदात्मा ॥ २८ ॥

एतावता प्रमाणाभावे आत्मन्यसत्त्वापत्तिरिति परिहृतम् । सम्प्रति स्तत्र कैमुतिकन्यायेन प्रामाण्यमुपपादयितुं सर्वप्रमाणविषयत्व- मनस्तावदाह—किञ्चेति । प्रमाणानामात्ममात्रविषयत्वे हेतु- ह—अज्ञातभावादिति । अज्ञातज्ञापकत्वमेव प्रामाण्यं प्रमाणा- ादम् । अज्ञातत्वञ्चात्मन एव स्वयंभानानर्हत्वात्तस्यैवाज्ञान- मैत्यविषयत्वम् । नत्वनात्मनस्तस्याऽज्ञानकार्यतया जडत्वादिति र्थः ॥ २८ ॥

प्रेमास्पदत्वात्सुखमेव नित्यं
स्वयंप्रकाशं परमात्मतत्त्वम् ।

सुप्तौ परामर्शबलेन सर्वे-
न्द्रियाद्यभावेऽप्यवभासमानम् ॥

आत्मनो ज्ञातत्वमुपपादयितुं भूमिकां रचयति— तावत्परप्रेमास्पदत्वात्सुखात्मा, तच्च सुखं नित्यं स्वप्रका- मस्वाप्समिति परामर्शबलेन सुषुप्तौ सर्वेन्द्रियविषयाद्युपरमे- त्वादिति योजना ॥ २९ ॥

ततश्च जाग्रत्स्वप्नयोऽस्ति भाती-
त्येवं प्रतीचि व्यवहारयोग्ये।
न भाति नास्तीति विपर्ययो यः
स्वाज्ञानजन्यः स च दृष्ट एव ॥

ततः किमित्यत्राह—तत इति । ततश्च जाग्रदवस्था- भातीति प्रतीतौ प्राप्तायामपि योऽयं नास्ति न भाती- सोऽधिष्ठानाज्ञानजन्य एव दृष्ट इति योजना ॥ ३० ॥

रज्जोर्यथाऽज्ञानजसर्पभानं
तथाऽऽत्मनोऽज्ञानजदृष्टिसिद्धिः।
तथा च मानं सकलं प्रतीच्य-
ज्ञातात्मभावे फलवत्त्वमेति ॥

एतदेव दृष्टान्तेन द्रढयति—रज्जोरिति । रज्ज्वा- व्यवहारे तथा दृष्टत्वादित्यर्थः। फलितमाह—तथा चेति। नावृत्त आत्मभावो निरतिशयसुखात्मत्वं यस्य तस्मि- फलवत्त्वं भजते इत्यर्थः ॥ ३१ ॥

अज्ञानजन्यावरणं प्रतीचि
प्रकल्प्यतेऽज्ञात इतश्चिदात्मा ।
प्रमाणसाफल्यमपीह सम्यग-
ज्ञातवस्त्वास्पदमेव मानम् ॥ ३२ ॥

एतदेव स्पष्टयति—अज्ञानेति । अज्ञात इति च्छेदः ॥ ३२ ॥

जडे स्वतोऽप्यावृतरूपभावाद-
ज्ञानजन्यावरणं न कल्प्यम् ।
प्रयोजनाभावत एव नैव
प्रमाणयोग्योऽविदिताद्यभावात् ॥ ३३ ॥

यो यत्र धत्तेऽतिशयं स तस्य
स्याद्गोचरो नैवमनात्मनीदम् ।
अज्ञानमाधत्त इहाफलत्वा-
त्कथं भवेत्तस्य स गोचरोऽपि ॥ ३४ ॥

जडेऽज्ञातत्वाभावमुपपादयति—जडे इत्यादिद्वाभ्यां । योऽज्ञानादिपदार्थो यत्र वस्तुनि अज्ञातादिरूपमतिशयं धत्ते, तत्र वस्तु तस्याज्ञानापदार्थस्य विषयः स्यादित्यर्थः ॥ ३३—३४ ॥

कथं घटोऽज्ञात इति प्रतीति-
स्तर्हीति चेदुच्यत उत्तरं भोः ।
घटादिरध्यस्त इहात्मनीशेऽ-
ज्ञानेन सार्द्धं तत एवमस्ति ॥ ३५ ॥

घटेऽज्ञातत्वव्यवहारोऽन्यथासिद्ध इत्याकाङ्क्षापूर्वक
कथमिति। घटादेरज्ञानेन सह्यात्मन्यध्यस्तत्वात्तथा व्यवहार

घटाद्यधिष्ठानतया चिदात्मा-
ज्ञानावृतोऽज्ञात इति प्रतीतिः।
मानप्रवृत्तेरुदितात्मवृत्त्या
ध्वस्तावृतिर्वृत्तिगतो विभाति॥

सर्वत्र ज्ञानात( दि ? )व्यवहारोऽधिष्ठानभूतात्मन्येव
तीत्याह—घटादीति । घटाद्यधिष्ठानत्वेन चिदात्मैव
'अज्ञान' इति च्छेदः। प्रमाणप्रवृत्तेरूर्ध्वमुदिता जाता या
नभूतात्मविषया वृत्तिस्तया ध्वस्ता निरस्ता आवृतिरावरणं
घटाद्यधिष्ठानात्मा वृत्तिगतो विभातीति योजना। अयं भाव
च्छिन्नचिदात्मा घटेन्द्रियसन्निकर्षसमुद्भूतघटाकारान्तःकरण
स्ताविद्यः सन् घटावच्छिन्नवृत्तौ प्रतिबिम्बितो घटं भासय
तीत्युपपत्तिः। एवं सकलजडप्रतीतिरप्यूह्येति॥ ३६॥

तथा च सर्वैरपि यः प्रमाणैः
सिद्धः कथं तस्य चिदात्मनस्ते।
मतं प्रमाणाधिपतेः प्रमाणा-
भावादसत्त्वं हठमात्रमूलम्॥ ३७॥

चिदात्मनः सर्वप्रमाणविषयत्वनिरूपणस्य
चेति॥ ३७॥

कथं तदात्मा श्रुतिमात्रगम्यः
सर्वैः प्रमाणैर्यदि गम्यतेऽसौ।

नह्यागमान्ता अनुवादिनः स्यु-
रज्ञातगन्तार इमे प्रमाणम् ॥ ३८ ॥

आत्मनः सर्वप्रमाणगोचरत्वे "तन्त्वौपनिषदं पुरुषं पृच्छामि" ० ३ । ९ । २६) इति श्रुतौ औपनिषदत्वविशेषणव्याहतिं शङ्कते— यमिति । "सर्वं विशेषणं सावधारणम्" इति न्यायाद्धुपरञ्जकत्व- त्रकल्पनायां फलाभावेनाध्ययनविधिविरोधादन्यप्रमाणव्यावर्त्तकत्वमे- त्मन्यौपनिषदत्वविशेषणस्य वक्तव्यम् । तच्च सर्वप्रमाणविषयस्या- नो न सम्भवतीत्यौपनिषदत्वविशेषणमात्मनः कथमपि न सङ्गच्छेतेति त्पर्य्यार्थः ॥ ३८ ॥

नैवं चिदानन्दविशुद्धपूर्ण-
प्रत्यक्स्वरूपेण यतः स आत्मा ।
मानान्तरागोचर एष तस्मा-
द्वेदान्तमात्रावगतिर्मतो मे ॥ ३९ ॥

तदेतद्दूषयति—नैवमिति । यद्यपि प्रपञ्चाविच्छेदेनात्मनः सर्व- माणविषयत्वम्, तथापि परिपूर्णसच्चिदानन्दादिरूपेण मानान्तरा- ोग्यत्वात्; तेन रूपेणात्मनः श्रुतिमात्रगम्यत्वादौपनिषदत्वविशेषणं न वेरुद्धयते इति तात्पर्य्यार्थः ॥ ३९ ॥

नन्वागमोद्भूतधिया निवर्त्याऽ-
ज्ञानावृतत्वं श्रुतिगोचरत्वम् ।
न स्वप्रकाशे तमसाऽऽवृतत्वं
सम्भावितं सूर्य्य इवान्धकारम् ॥ ४० ॥

ननूपनिषज्जन्यज्ञाननिवर्त्याज्ञानविषयत्वमुपनिषद्वि... प्रकाशचिदात्मन्यज्ञानविषयत्वं सम्भवति भासमानत्वा... रेकदैकत्र विरोधादिति शङ्कते—नन्विति ॥ ४० ॥

सत्यं तथैवाऽस्ति स एष आत्मा
स्वयंप्रकाशः परमार्थगत्या।
तथापि मध्यन्दिनगेऽपि भानौ
तमो दिवान्धाः परिकल्पयन्ति॥

तदुक्तमङ्गीकरोति—सत्यमिति। तर्हि कथमज्ञानवि... आह—तथापीति ॥ ४१ ॥

प्रभाकरोऽयं तमसावृतोऽस्ती-
त्येवं यथा ते परिकल्पयन्ते।
तथैव मूढाः परिकल्पयन्त्य-
ज्ञानावृतोऽयं परिपूर्ण आत्मा॥

दृष्टान्तं विवृणोति—प्रभाकर इति। दार्ष्टान्तिकं... तथैवेति ॥ ४२ ॥

अतः प्रतीच्यात्मनि कल्पितस्याऽ-
ज्ञानस्य पूर्वं स्वयमेव नित्यम्।
चिदात्ममाहात्म्यसमुद्भुतस्य
निवृत्तये वेदगिरां प्रवृत्तिः ॥ ४३ ॥

नन्वात्मनि वेदान्तगिरां प्रवृत्तिः किं तद्भानाय ? ... वा ? नाद्यः, दृश्यत्वेन मिथ्यात्वापत्तेः। न द्वितीयः, ...

त्मवन्निवृत्त्यनर्हत्वादिति तत्राह—अत इति । कल्पितत्वमुपपादि—पूर्वमिति । यथा रज्जुस्वरूपपर्यालोचनया सर्पादिस्तत्र नास्ति तथाऽऽत्मस्वरूपपर्यालोचनयाऽज्ञानं तत्रासदित्यर्थः । न अनादित्वमात्रं निवृत्त्यनर्हत्वे प्रयोजकम्, प्रागभावे व्यभिचारात् । भावत्वे सत्यनादित्वं नित्यत्वे प्रयोजकमिति चेत्, न; भावत्वानङ्गीकारात् । असद्वैलक्षण्यवत् सद्वैलक्षण्यस्यापि स्वीकारात् । अत एवाज्ञानं विशिष्ट—कल्पितस्येति । अनिर्वाच्यस्येत्यर्थः ॥ ४३ ॥

स्वयंप्रकाशात्मनि बोधजन्या-
ज्ञानक्षतेर्भिन्नमलान्तरस्य ।
निरूपणाभावत आगमान्त-
वाचां चिदानन्दपदैकभाजाम् ॥ ४४ ॥

अत एव स्वप्रकाशतया नित्यानुभवरूपे आत्मनि वेदान्तानामज्ञाननिवृत्तिरेव फलं नान्यदित्याह—स्वयंप्रकाशात्मनीति ॥ ४४ ॥

अतः स्वयंज्योतिष आत्मनस्त-
दाकारवृत्तेर्जननेन सिद्धम् ।
वेदान्तवाचां विषयत्वमेवं
न स्वप्रकाशत्वमसिद्धमस्य ॥ ४५ ॥

अज्ञाननिवृत्तिरात्माकारवृत्त्युत्पादनद्वारैव । तथा चाकारवृत्त्युत्पादकत्वेन वेदान्तानामात्मविषयत्वमित्याह—अत इति । न स्वप्रकाशत्वमस्यात्मनोऽसिद्धम, श्रुत्यनुमानप्रमाणसिद्धत्वात्तस्येत्यर्थः ॥ ४५ ॥

नापेक्षतेऽसावितरप्रकाशं
प्रत्यक् स्वसत्तासमये चिदात्मा ।

प्रकाशतो ह्यव्यभिचारभावा-
दालोकवत्संविदिवाथऽवेति ॥

तत्साधकमनुमानप्रमाणमाह—नेति । असौ ... स्वसत्तासमये प्रकाशतोऽव्यभिचारिभावादितरप्रकाशं ... कवत् । अथवा संविद्वदिति योजना । हिशब्दः ... नानुभवप्रसिद्धिं द्योतयति । इतिशब्दोऽनुमानसमाप्ति... क्तमभियुक्तैः—आत्मा इतरानपेक्षप्रकाशः, स्वसत्ता... भिचारित्वात्, संविद्वदालोकवद्वेति । ज्ञानस्वप्रकाश... दृष्टान्तः संविद्वदिति । नैयायिकादीन् प्रति दृष्टान्त... तथाचानुमानेनापि स्वप्रकाशत्वमात्मनः सिद्धमिति भावः ।

तस्मात्स्वविज्ञानघनस्वभाव-
तया स्वयं ज्योतिरुदीरितोऽसौ ।
अत्राऽयमित्यादिगिराऽनुभूत्या
प्रसिद्ध एष श्रुतिमौलिबुद्धेः ॥ ४७ ॥

नेदमनुमानं निर्मूलं श्रुतिमूलकत्वादित्याह—तस्मा... मौलिजन्या बुद्धिर्यस्य तस्य विदुषोऽनुभूत्या एष स्व... प्रसिद्ध इत्यर्थः, "अत्रायं पुरुषः स्वयंज्योतिर्भवति" (बृ० ...) इत्यादिश्रुतेः । अयमर्थः—अत्र स्वप्नावस्थायां स्वप्ने ... इत्यविवादम्, तत्प्रकाशनं न तावद्बाह्येन्द्रियात्, ... तदानीमुपरमाच्च । नापि मनसः, तस्य रथादिरूपेण ... परिशेषात् स्वयंज्योतिरात्मेत्यर्थः ॥ ४७ ॥

नन्वेष आत्मा न तथा यथोक्तो
यतो विरुद्धानुभवावगाह्यः ।

कदाचिदात्मानमहं हि वेद्मी-
त्येवं न वेद्मीति मतिः कदाचित् ॥ ४८ ॥

आत्मानुभूतिद्वयगोचरत्वा-
न्न स्वप्रकाशोऽस्ति घटादिवत्सः ।
ज्ञातो घटोऽज्ञात इति प्रतीतिः
समोभयोः कुम्भचिदात्मनोर्वै ॥ ४९ ॥

आत्मनः स्वप्रकाशत्वं न सम्भवति, तद्विरुद्धानुभवविषयत्वादिति
ङ्क्ते—नन्विति । कदाचिदात्मानं वेद्मीत्यनुभवः, कदाचिन्न वेद्मीत्यनु-
:, घटं जानामि, घटं न जानामीतिवत् । तथा च विरुद्धानुभव-
यत्वात् कथमात्मनः स्वप्रकाशत्वमिति द्वयोस्तात्पर्य्यार्थः ॥४८-४९॥

तत्स्वप्रकाशं किल यन्न केना-
प्याकारतः कस्यचिदेव जातु ।
ज्ञानस्य कर्म्मैव भवेत्तदन्यद्
न स्वप्रकाशं परिभाषया यत् ॥ ५० ॥

ज्ञानकर्म्मत्वस्वप्रकाशत्वयोरेकदैकत्र विरोधान्न दृष्टचरत्वमित्यभि-
ाह—तदिति । किल प्रसिद्धं यद्वस्तु केनाप्याकारेण "सार्वविभक्ति-
सिः" कस्यचिदेव ज्ञानस्य जातु कदाचिदपि कर्म्मैव न भवेत्,
कारस्य भिन्नः क्रमः' नैव ज्ञानकर्मतां भजते; तदेव स्वप्रकाशम्,
न्यत्ततोऽन्यथा स्वप्रकाशं न भवति, यत्परिभाषया स्वप्रकाशमुच्यते
योजना ॥ ५० ॥

न वेद्मि मामित्यनुभूतियोगा-
दज्ञातता स्वीक्रियते यदि स्वे ।

न स्वप्रकाशत्वमनात्मवत्स्वे
तथापि किं न क्षतिरद्वयस्य ॥ ५१ ॥

"अनीशया शोचति मुह्यमानः" (मु० ३। २) इति
जानामीत्यनुभवादपि न स्वप्रकाशत्वमात्मनः सिद्ध्यतीत्या-
आत्मनि तत्त्वज्ञाननिवर्त्याज्ञानविषयत्वमज्ञातत्वमस्तु, कोऽि
आह—तथापीति। आत्मन एवंरूपाज्ञातत्वस्वीकारे विषयत्व-
महं न जानामीतिवद् घटमहं न जानामीत्यनुभवाविशेषाद्
वास्वप्रकाशत्वमात्मनः स्यादिति भावः ॥ ५१ ॥

न ह्येकवस्तुन्यनुभूतिरेषा
न भाति भातीति च यौगपद्यात्।
न भाति यद्येष कथं तदानीं
विभाति भातीति यदा न भाति ॥ ५२ ॥

ननु स्वप्रकाशत्वमज्ञातत्वञ्चोक्तलक्षणमस्त्वात्मनि को
इत्यत आह—नहीति। स्वप्रकाशस्यानादिभावतया कि
स्याप्यनादित्वेनाकार्यत्वात्कथं युगपदुभयं विरुद्धमात्मनि
भावः ॥ ५२ ॥

अतो विरुद्धानुभवावगाह्यः
कथं स्वयंज्योतिरयं चिदात्मा।
अत्रोच्यते श्रौतमतः समाधि-
स्तवोक्तदोषाऽपनयाय वादिन् ॥ ५३ ॥

पूर्वपक्षमुपसंहरति—अत इति। उक्तदोषपरिहारा
काशत्वं साधयितुं प्रतिजानीते—अत्रोच्यते इति ॥ ५३ ॥

ज्ञातस्तथाऽज्ञात इति प्रतीति-
र्याऽनात्मनिष्ठा न च सात्मनि स्यात्।
विलक्षणोऽयं विदितात्तथान्यो-
ऽप्यज्ञाततः श्रौतवचःप्रसिद्धः ॥ ५४ ॥

अनात्मनिष्ठोऽयमुभयविधोऽनुभवो न निरूपणीयात्मतत्त्वमनुवयतीति परिहरति—ज्ञात इति। "अन्यदेव तद्विदितादथोऽविदितादधि" ( के० १। ३ ) इति श्रौतवचसा प्रसिद्ध इति ॥ ५४ ॥

जानामि मामित्यनुभूतिरेषा
न शुद्धमेनं विषयीकरोति।
आत्मानमज्ञानमुखैर्विशिष्टं
वैकल्पिकत्वादवगाहतेऽसौ ॥ ५५ ॥

मामहं जानामीत्यनुभवोऽज्ञानानानन्दादिवैशिष्ट्येनात्मानं विषयीकरोति, न शुद्धमित्याह—जानामीति। वैकल्पिकत्वादिति। आत्मानं जानामीति प्रत्ययो न निर्विकल्पकः किञ्चिदित्येव हि तदाकारः शब्देन व्युत्पाद्यते। न चात्र तथा, आत्मानमित्यात्मशब्देन ज्ञानाकारव्युत्पादनात्। मानसं चैतज्ज्ञानं परैरिष्यते। मनसश्चेन्द्रियस्य द्रव्ये प्रवृत्तिर्गुणोपरागेण। गुणश्चात्र दुःखादिरेव, दुःखाद्युपरागश्च न नैयायिकादिवदात्मनः स्वतोऽस्मन्मते, किन्तु दुःखादिधर्मकान्तःकरणतादात्म्यात्। तत्तादात्म्यं नाज्ञानमन्तरा। तथा चात्मानमहं जानामीत्यनुभवबलादज्ञानादिवैशिष्ट्यं भाति, न विशुद्धं स्वरूपम्। ततो विशिष्टमेव ज्ञानकर्म्म, न शुद्धं स्वरूपमिति तात्पर्यार्थः ॥ ५५ ॥

न ज्ञानकर्म्मत्वमयं चिदात्मा
स्वयंप्रकाशो भजते विशुद्धः।

विशिष्टवृत्तेरपि धर्मकस्य
विशेषणे वृत्तिरितीष्यते हि ॥ ५६ ॥

एतदेव विवृणोति—नेति। विशिष्टस्यास्वप्रकाशत्वे विरोध इत्यर्थः। तस्यापि स्वप्रकाशत्वे विशिष्टवृत्तेर्धर्मस्य विशेषणे वृत्तित्वनियमादज्ञानादेरपि तथात्वं स्यात्। अतो विशिष्टं न स्वप्रकाशमित्यर्थः ॥ ५६ ॥

न वेद्मि मामित्यनुभूतिरेषा
स्वयंप्रकाशत्वविरोधिनी नो।
अज्ञानसद्धा विषयीकरोति
स्वज्योतिरुल्लिख्य चिदात्मवस्तु ॥

मामहं न वेद्मीत्यनुभवो न स्वप्रकाशत्वविरोधीत्याह—यद्यप्यहं मां न जानामीत्यनुभवोऽज्ञातत्वं शुद्धे आत्मनि ... तथापि विना स्वप्रकाशत्वमात्मन्यज्ञातत्वं बोधयितुं न ... तत्वं न स्वप्रकाशत्वविरोधि, किन्तु तदुपपादकमिति ...

अतोऽहमात्मानमिति प्रतीति-
रात्मानमुल्लिख्य च भासमानम्।
स्वयं प्रकाशैकतयाऽनु नेत्यऽ-
ज्ञानावृतिं सा विषयीकरोति ॥ ...

नन्वज्ञातत्वम्, अभासमानत्वम्, तद्ग्राहकञ्च प्रमाणं ... कत्वसाधकम्? अतिप्रसङ्गादित्यत्राह—अतोऽहमिति। ... ज्ञानं विशिष्टरूपम्। तत्र विशेष्यमज्ञातत्वम्। तस्य विषयीभूत विषय आत्माऽज्ञातत्वव्यावर्तकत्वाद्विशेषणम्। अत आत्मा...

नस्य तस्य विशेषणविषयत्वनियमाद्विषयः । ततस्तज्ज्ञानमात्मानं शेषणत्वात्स्वप्रकाशतया भासमानमुल्लिख्य अनु पश्चात् 'नेति' अने-ज्ञानलक्षणमावरणं तत्र विषयीकरोतीति तात्पर्यार्थः ।। ५८ ।।

अस्वप्रकाशस्य विरुद्धमेतद्
न भाति भातीति च यौगपद्यात् ।
न चाहमहं वेद्म्यनुभूतिसिद्धं
स्वयंप्रकाशत्वमिहात्मनश्च ॥ ५९ ॥

ननु भासमाने आत्मनि कथं तद्विरुद्धमज्ञातत्वं सम्भवतीत्याशङ्क्याह—अस्वप्रकाशस्येति । अज्ञानं तावदावरकम्, "नीहारेण प्रावृताः" इति श्रुतेः । आवरकञ्च वस्त्रादिभावरूपमेव दृष्टम् । तेन भासमानेऽप्यात्मनि अज्ञातत्वं सम्भवति वायोरन्यत्र रूपस्पर्शवत् स्थित्यविरोधादिति तात्पर्यार्थः ।। ५९ ।।

घटादिविश्वं परमात्मनीशे
स्वाविद्ययाऽध्यस्तमतो घटादौ ।
अभानभाने अपि तत्र विश्वा-
धिष्ठान एवात्मनि कल्पितेस्तः ॥ ६० ॥

ननूक्तानुभवस्य द्वैविध्यं घटाद्यावपि दृश्यते, तत्रापि स्वप्रकाशकत्वापत्तिः स्यादित्याशङ्क्य घटादीनामात्मन्यध्यस्ततया स्वतन्त्रसत्ताऽभावात्तत्र दृश्यमानं तद्द्वैविध्यमधिष्ठाने पर्यवस्यतीत्याह—घटादीति।।६०।।

अध्यस्तसत्ता पृथगात्मनो नाऽ-
धिष्ठानभूता तत एव आत्मा ।

स्वयंप्रकाशोऽस्ति सुखस्वभावः
स्वाविद्यया भाति जगत्स्वभावः

अध्यस्तस्याधिष्ठानानतिरेकत्वं दर्शयन् फलितमाह—
तथा च स्वप्रकाशत्वमजहदेवाऽऽत्मतत्त्वमज्ञानावृतं
भातीति फलितोऽर्थः। अक्षरार्थस्तु निगदव्याख्यातः॥

अनाद्यविद्यावरणावृतोऽसौ
द्वैतात्मना भाति चिदद्वितीयः।
असङ्ग आत्मा परमार्थतस्तु
विज्ञानसारो भ्रमशून्य एकः॥

अज्ञानकृतावरणमन्तरेण न स्वप्रकाशे शुद्धवस्तुनि
सङ्गच्छते, न वाऽज्ञानकल्पितेन जगता निर्विकारत्वं
विरपीत्याशयेनाह—अनादीति। निगदव्याख्यातं पद्यं

तस्मात्स्वतः सिद्धमखण्डतत्त्वं
प्रत्यञ्चमानन्दमपारबोधम्।
विध्वस्तमायागुणसम्प्रवाहं
ज्ञात्वा विमुच्येत मृषात्मबन्धात्

प्रकृतमुपसंहरति—तस्मादिति। यस्मात्सर्वप्रमाण
लौकिकप्रमाणगोचरो न भवति, वेदान्तानामपि
निवर्त्याज्ञानविषयत्वेनैव विषयो, न साक्षात्,
वात्। तस्मात्स्वतः सिद्धमितरनिरपेक्षप्रकाशस्वभावत्वेन
ण्डतत्त्वं स्वगतादिभेदशून्यमनारोपितवस्तु, प्रत्यञ्चमवि

स्वभावत्वेन सर्वान्तरम्, आनन्दं निरुपाधिकनिरतिशयप्रेमास्पदतया स्वरूपम्, न विद्यते पारं आश्रयविषयसन्निकर्षादिकृतः परिच्छेदो य बोधस्य तम्, अतः स्वरूपबोधमाहात्म्येनैव विध्वस्ता बाधिता मायाऽनिर्वाच्याऽविद्या तत्कार्यभूतगुणसम्प्रवाहो जन्ममृत्युपरम्परा-रूपः संसारश्च यस्मिंस्तमात्मानं ज्ञात्वा—वेदान्तवाक्यज्यासन्दिग्धा-र्यैस्तात्त्वबोधेन साक्षात्कृत्य, मृषाऽज्ञानकार्यतया आत्मनो बन्धः र्तृत्वभोक्तृत्वादिलक्षणः संसाराख्यस्तस्माद्विमुच्यते—विशेषेण पुन-लक्षणवृत्तिरहिततया मुच्यते। कृतकृत्यो भूत्वा स्वात्मन्यव-स्तो भवतीत्यर्थः। एतादृशतत्त्वज्ञानमन्तरेण संसृतेर्मोक्षो स्तीति भावः ॥ ६३ ॥

अध्यस्तमज्ञानकृतं प्रतीचि
स्वतो विमुक्ते जनिमृत्युबन्धम्।
स्वात्मावबोधेन समूलमज्ञा-
पवाध्य जीवन्निह मुच्यतेऽज्ञः ॥ ६४ ॥

यदि बन्ध आत्मनि स्वाभाविकः स्यात्तदा स्वभावस्यान्यथाकर्त्तु-शक्यतया तत्त्वज्ञाननिवर्त्यो न स्यात्। तत्त्वज्ञाननिवर्त्यत्वान्यथानु-पत्त्या बन्धस्याध्यस्तत्वं कल्प्यते। ततश्चाध्यस्तबन्धस्य मूलभूतमज्ञान-अध्यस्तमित्यभिप्रेत्याह—अध्यस्तमिति। स्वतो विमुक्ते इति हेतुगर्भ-शेषणं स्वतः एव विमुक्तस्वभावत्वं बन्धस्याध्यस्तत्वं गमयति। तेन त्यमुक्तस्वभावेऽज्ञाननिवृत्तिमन्तरा तत्त्वज्ञानकृतातिशयोऽपि नास्तीति दितम् ॥ ६४ ॥

प्रकृतिविकृतिभावं बाध्यमेवाऽपवाध्य
श्रुतिशिखरगिरोत्थाद्वैततत्त्वावबोधात्।

व्रजति चरमजन्मा यं विमुक्तस्वभावं
तमहममृतमीशं श्रीमुकुन्दम्प्रपद्ये

इति प्रत्यक्तत्त्वचिन्तामणौ तृतीयं प्रकरणं सम्पूर्णम् ॥

एवं प्रकरणं परिसमाप्य, तत्फलभूतं भगवदनुसन्धानं यदश्नासि'' (गी० ९। २७) इत्युक्तन्यायेन प्रकरण कर्मणो भगवति समर्पणञ्च कुर्वन्प्रकरणान्ते मङ्गलमाचरति विकृतिभावमिति। अज्ञानतत्कार्यरूपबन्धमध्यस्तत्वेन चरमजन्मा तत्त्वविद् वेदान्तोत्थाऽद्वैततत्त्वसाक्षात्कारेण स्वभावं भगवन्तं व्रजति—तत्स्वरूपेणावस्थितो भवति, विनाशिनम्, ईशं मायानियन्तृत्वेन तत्कृतदोषविनिर्मुक्तम्, मुकुन्दमन्तः प्रत्यगात्मतया प्रपद्ये—शरणं व्रजामीत्यर्थः ॥

अध्यस्तमप्यखिलविश्वमनन्तदुःखं
सत्यं विभाति यदबोधत आविमुक्तेः।
यज्ज्ञानतो विलयमेति मृषान्ध्यमूलं
तं नन्दनन्दनमहं कलये मुकुन्दम् ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषि
विद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां
भिधायां प्रत्यक्त्वप्रकाशत्वसाधकमयूखाभि
तृतीयं प्रकरणं समाप्तिमगमत ॥ ३ ॥

# अथ चतुर्थं प्रकरणम्

यदज्ञातं विश्वं स्थिरचरमिवाऽऽभाति सकलं
विबुद्धं सच्छान्तं सुखममृतमद्वैतमकलम् ।
स्थितं हृद्देशेऽद्धाप्यतिजडधियां दूरमिव यत्
विदां प्रत्यग्भूतं तदमितमहोऽन्तश्च कलये ॥ १ ॥

यं शास्त्रयोनिमखिलज्ञमनन्तशक्तिं
ब्रह्मादिवागपि समर्थतराऽसमर्था ।
कर्त्तुं गुणैरभिमुखं निजमानयोगै-
स्तं नन्दमन्दिरमणिं शरणं प्रपद्ये ॥ १ ॥

आनन्दकन्दमभिवन्द्यपदारविन्दं
छन्दोरसं स्वरसतोऽमरभृङ्गसेव्यम् ।
भक्त्या मुकुन्दममृतायनमात्मबुद्धेः
प्रावण्यसिद्धय इहाद्भुतमाश्रयेऽन्तः ॥ २ ॥

अतीतानन्तरप्रकरणे "अध्यस्तमज्ञानकृतं प्रतीचि स्वतो विमुक्ते निमृत्युबन्धम्" इत्यादिना प्रत्यगात्मनोऽज्ञानकृत एव बन्धो नतोऽज्ञाननाशे तन्नाश इत्युक्तम्, तदेवोपपादयितुं प्रकरणान्तरमारमाणः स्वेष्टदेवतानुसन्धानरूपं मङ्गलमाचरन्नर्थात्प्रकरणप्रतिपाद्यमर्थं गृह्णाति—यदज्ञातमिति । तदमितमहोऽपरिच्छिन्नतेजःपदास्पदं कृष्णाभिधमन्तः प्रत्यगभिन्नतया कलयेऽनुसन्दधे इत्यन्वयः । तत्किंनत्याकाङ्क्षायामाह—यदिति । यदज्ञातं सत् स्वाश्रयस्वविषयमायासद् विश्वमाकाशादिभूतजातं तत्कार्य्यं सकलं ब्रह्माण्डं तद्गतं

स्थिरचरं चराचरशरीरजातं भौतिकमिवाभाति। यद्विद्वं
साक्षात्कृतं सत् शान्तमविद्यातत्कार्यबाधोपलक्षितम्,
स्वभावम्, सुखस्वरूपम्, द्वैतशून्यम्, अकलं निरवयवमा
बुद्ध्यारूढं प्रकाशते। यद्ब्रह्मदेशो अद्धा साक्षात् स्थित
देहाद्यभिमानिनां दूरमिव भाति, वर्षकोटिभिरप्यप्राप्य
विदां भगवत्प्रसादलब्धतत्त्वज्ञानानां प्रत्यग्भूतं स्वस्वरूपं
भाति। तत्कलये इति योजना ॥ १ ॥

सदानन्दाम्भोधौ जगदिदमशेषं सकलनं
समध्यस्तं शुद्धे निरवधिपदे स्वात्मनि
अविद्याशक्त्या तद्विमलपदबोधेन सक
समूलं विध्वस्तं न च पुनरुदेतीति नि

एवं मङ्गलव्याजेन प्रकरणार्थं सङ्क्षेपेण प्रदर्श
प्रतिपादयितुं प्रमेयं सूत्रयति—सदानन्दाम्भोधाविति
प्रत्यक्तत्त्वे, विभावपरिच्छिन्नतया पूर्णे, निरवधिपदे सर्वा
तया स्वव्यतिरिक्तावधिवर्जिते पदे सकलफलावधिभूते,
नतत्कार्यसम्पर्कशून्ये वस्तुन्यविद्यारूपा या शक्तिस्तया
जातं समस्तं सकलनं तद्विषयकप्रतिभासः कलना
गध्यस्तमविद्यमानमपि विद्यमानमिवारोपितम्, तद् दृश्य
मूलाज्ञानसहितं विमलपदबोधेन शोधिततत्त्वं पदार्थ
क्यसाक्षात्कारेण विध्वस्तं बाधितं सत् न च पुनरु
बाधितत्वात् कारणाभावान्न च पुनरुद्भवतीति
सिद्धान्तनिश्चय इति योजना ॥ २ ॥

ननु प्रत्यक्तत्त्वे जनिमृतिमयी संसृति
प्रतीता सद्रूपा वदसि कथमध्यस्तम

प्रतीतेः प्रामाण्यात्स्वत इतरबाधादिविरहात्
प्रमाणैः सिद्धस्य प्रथितमिह वस्तुत्वमुचितम् ॥ ३ ॥

प्रत्यक्षादिप्रमाणसिद्धविश्वस्याऽज्ञानकल्पितत्वमसहमानः पूर्वोक्तमर्थं-
ते ऽपति—नन्विति । प्रत्यक्तत्त्वे जीवात्मनि जन्ममृत्युप्रवाहलक्षणा
तिरियं प्रत्यक्षादिप्रमाणसिद्धा, प्रतीता सर्वप्रत्ययमारूढा, सद्रूपा
ाधितार्थक्रियाकारित्वेन सत्यैव भवति । एवं सति त्वं कथमखिलं
णप्रमेयादिविश्वमध्यस्तमारोपितमिति वदसि ? सकलमनुभवन्
शङ्कतया कथं तस्याऽपह्नवं करोपीत्यर्थः । न च प्रतीतेर्भ्रमत्वं शङ्क-
, तस्याश्च स्वतः प्रामाण्यात्, इतरबाधादिविरहात्कारणदोषबाधक-
प्रथानुपलम्भात् । प्रमाणप्रतीतस्य चेह व्यवहारभूमौ वस्तुत्वं पर-
र्थसत्यत्वम्, प्रथितं लोकप्रसिद्धम्, उचितञ्च । अन्यथा भ्रमप्रमा-
रोपापत्तिः । तथा चात्मनि संसारः परमार्थ एवयुक्त इत्यर्थः ॥ ३ ॥

न चेद्वस्तुत्वं स्याज्जगति च तदा शास्त्रमखिलं
भजेत्प्रामाण्यं तत्कथममृतभोगादि करणम् ।
मृषाहेर्विध्वस्त्यै क्वचिदपि न मन्त्रादिकरणं
विधत्ते किन्त्वेतामधिकरणबुद्धिं दृढमतिः ॥ ४ ॥

अत्रैवयुक्तयन्तरमाह—न चेदिति । यदि संसारः परमार्थो न
न्, तदा कथमिष्टाऽनिष्टप्राप्तिपरिहारोद्देशेन साधनविधायिशास्त्रं प्रमाणं
त् ? नहि रज्जुसर्पनिवृत्तये मन्त्रौषधादिसाधनमुपदिश्यते,
न्तु रज्जुस्वरूपज्ञानमेव दृढमतिरभ्रान्तः पुरुषो विधत्ते—उपदि-
तीत्यर्थः ॥ ४ ॥

ततश्चारब्धव्यं भ्रमतिमिरविध्वंसनकरं
मुकाण्डं ज्ञानस्याऽनुपकृतमिदं कर्म न कदा ।

नहीत्थं पश्यामस्तत इदमनाद्यन्तमम
विचित्रारम्भाढ्यं नहि भवितुमध्यस्त

प्रपञ्चमिथ्यात्ववादिनं प्रति बाधकमप्याह—तथ विधायकं सुकाण्डमुपनिषद्रूपं भ्रमतिमिरविध्वंसकत्वा कर्मविधायकं काण्डं नारब्धव्यं स्यादनुपयोगात्। विधायकवेदाप्रामाण्यस्वीकारे तव वेदैकदेशपरित्याग णाच्च कथमुभयभ्रष्टता न स्यात्? किञ्च स्यादेव प्रमाणारूढं स्यात्; नहीत्थं पश्यामो वयम्। तस्मादिदं जगदाद्यन्तशून्यं सदैव प्रवाहरूपम्, अमलं त्वदभिमत दोषासंस्पृष्टम्, विचित्रारम्भसंयुक्तं नहि कदाचिदध्यस्त मित्यर्थः। तथापि प्रपञ्चस्याऽविद्यकत्वाभिधानमत भावः ॥ ५ ॥

यदा बुद्धं ब्रह्माऽमृतमजमनाकारममलं
तदाऽन्यं कं दृष्ट्वा ह्ययमुपदिशेत्सत्यम
कृतार्थो विद् भूत्वा स्वपरमतभेदावदल
कथं शास्त्रारम्भो भवति भवतां पक्ष

आत्मस्वरूपसाक्षात्कारे सति संसारस्य मिथ्यात्व ततः प्रागेव? इति विकल्प्याद्यं दूषयति—यदेति। ब्रह्म अमृतमविनाशि, जन्मादिविक्रियाशून्यम्, आकार बुद्धं साक्षात्कृतम्; तदा तस्मिन्समये कमन्यं द्वितीय आलोच्याऽयं ज्ञानी हि यस्मादुपदिशेदुपदेशं कुर्या 'इदं जगदनृतम्' इति, तदुत्तरकालं प्रपञ्चस्यैवाभावात् त्वादिव्यवहारानुपपत्तेरिति भावः। अथ कश्चित्कालं

यते इति चेत्तत्राह—कृतार्थ इति। तथापि स्वयं कृतार्थत्वात् व्यतिरिक्तात्मान्तराभावनिश्चयात् तस्योपदेशसमये स्वमतस्थापनं तखण्डनमपेक्षितं स्यात्, तदपि दुर्घटं स्वपरपक्षविभागाभावादित्याह—ति। इदं स्वमतम्, इदं परमतम्, इति भेदस्य बाधितत्वात्कथं ां पक्षेऽखिलाध्यस्ततत्त्ववादिनां मते मायावादे उदिते यथोक्ते ारम्भोऽपि भवति? न कथमपीत्यर्थः॥ ६॥

पुरा तत्त्वज्ञानान्न च जगति मिथ्यात्वधिषणा
न वा प्रत्यक्षाद्यैरवगतमिदं बाध्यमपि च।
विना बाध्यज्ञानं भ्रमजमिति निश्चेतुमपि तत्
न शक्यं न श्रौतं वचनमपि वक्तुं क्षममिति॥ ७॥

ज्ञानात्प्रागेव संसारस्य मिथ्यात्वावगमपक्षं दूषयति—पुरेति। न ात्यक्षाद्यैरवगतमिदं जगदनुमानादिना बाधयोग्यम्। अपि चेति ानसमुदायो युक्त्यन्तरसमुच्चायकस्तदाह—विनेति। बाधक-रेण मिथ्यात्वानभ्युपगमादित्यर्थः। न वा श्रौतं वचोऽपि सर्व-णविरुद्धं वक्तुं समर्थमिति योजना॥ ७॥

न वा श्रौतज्ञानं कथमपि जगद्बाधकमिति
स्वभावादात्माऽयं भवति न परोक्षः श्रुतिमतः।
कथं तत्र ज्ञानं जनयति परोक्षं श्रुतिवचो
न वा तादृग्ज्ञानाद्भवति जगतो बाधनमपि॥ ८॥

नन्वागम एवात्मविषयं परोक्षज्ञानमुत्पाद्य प्रपञ्चबाधकः किन्न स्यात्? तत्राह—नवेति। निरुपाधिकस्यात्मस्वरूपस्यापरोक्षैकस्वभाव-तत्र परोक्षज्ञानासम्भवात्सोपाधिकज्ञानस्य विभ्रममात्रत्वात्तेनाऽ-

न्यस्य बाधानुपपत्तेः । श्रुतिरपि अपरोक्षस्वभावे प्रत्यगात्मनि
कथं जनयेत् ? प्रामाण्यापत्तेः । अपरोक्षस्य जगत्ताशेषा
द्बाधनमप्यनुचितमिति तात्पर्यार्थः ॥ ८ ॥

न सत्यः संसारो यदि भवति जीवात्मनि
किमर्थं तद्ध्वस्त्यै ह्युपदिशति शास्त्रं
मृषाबन्धध्वस्त्यै यदि मतमिदं नैतदपि
न मिथ्याहिध्वस्त्यै दिशति मणिमन्त्रादि

शास्त्रारम्भान्यथानुपपत्तिरपि संसारसत्यत्वं
न सत्य इति । स्पष्टम् ॥ ९ ॥

अतः संसारोऽयं भवति परमार्थस्त्वितरथा
प्रमात्वं वेदानां क्रतुजपपराणां कथम
जगत्तस्मादात्मन्यखिलमिदमाबालमति
किलाऽबाध्यं ज्ञानात्कथमपि लयं याति

फलितमुपसंहरति—अत इति । इतरथा तव मते
जपयज्ञादिपराणां वेदानां कथं प्रामाण्यं स्यात् ?
तत्, यथा वेदार्थं बुद्ध्वा तमन्यथाकर्त्तुं प्रवृत्त इत्यर्थः
न्तानामपि प्रामाण्यं वेदत्वाविशेषात् । इदमत्राकूतं
संसारसम्बन्धात्कोऽपि विशेषोऽस्ति ? न वा ? अस्ति
र्थिकः काल्पनिको वा ? पारमार्थिकश्चेत्, तदा
परमार्थमभ्युपगच्छतः सुखदुःखादिसंसारे कः प्रद्वेषः !
श्चेत्, तर्हि संसारभावाभावयोर्विशेषाभावाच्छास्त्र
निरर्थकः । काल्पनिकविशेषनिवर्त्तने न शास्त्रमर्थवत्

के सर्पसम्बन्धासम्बन्धावभासयो रज्जुगतविशेषाभावेऽपि द्रष्टृगत-शेषादेव सर्पभ्रान्तिसम्भवात्तन्निवृत्तये रज्जुस्वरूपोपदेशोऽर्थवान् । इह पुनरात्मन्यनात्माध्यासेऽधिष्ठानं द्रष्टा चोभयमप्यात्मैव, न तत्र कदाचिदप्यस्ति विशेषः । ततश्चात्मनि संसारभ्रान्तेरसम्भवे सति कथं तन्निवृत्तये शास्त्रमारभेत इति । प्रकृते किमायतमित्यत आह—तस्मादिति । तस्मात्संसारस्याबालपण्डितप्रतीतिसिद्धत्वात् तन्मिथ्यात्वे कर्मकाण्डज्ञानकाण्डयोरनारम्भप्रसङ्गादात्मनि पारमार्थिकः संसार इति तार्किका अध्वरमीमांसकाश्च मन्यन्ते इत्यर्थः ॥ १० ॥

इति प्राप्ते ब्रूमः शृणु दृढसमाधानमधुना
विनाऽध्यासं युष्मन्मत इदमनात्मात्मवपुषोः ।
जगद् दुःखाद्यात्म प्रभवति विभौ त्वं वद कथं
न सर्वव्यापी यः कथमपि परिच्छेत्तुमुचितः ॥११॥

एवं पूर्वपक्षे प्राप्ते तं दूषयितुं प्रपञ्चस्य स्वाभिमताध्यस्तत्वमुपपादयितुं चाध्यासमन्तरेण तन्मते संसारव्यवहारानुपपत्तिं प्रदर्शयन् प्रतिजानीते—इतीति । तत्र ये भवन्तस्तार्किकादयः सर्वगतात्मवादिनस्तेषां युष्माकं मतेऽनात्मा देहादिरात्मा च विभुस्तयोरात्मानात्मनोरन्योन्याध्यासमन्तरेणेदं जगद् दुःखादिरूपं विभौ सर्वगते आत्मनि कथं केन प्रकारेण प्रभवति बन्धकत्वेन समर्थं भवतीति त्वं वद । नहि यः सर्वव्यापी स कथमप्यध्यासमन्तरेण परिच्छेत्तुमुचितः । अहमस्मिन्सदने जानान इत्यादिपरिछिन्नव्यवहारगोचरयोग्यतां भजते इत्यर्थः ॥ ११ ॥

गुणा ये ज्ञानाद्यास्तव मतमता आत्मनि विभौ
त्वयोत्पत्तिस्तेषां कथमभिमता तत्र वद भोः ।

मनःसंयोगाच्चेद्भद कथमसौ योग उभयोः
परिच्छिन्नेनाऽऽत्मा विभुरपि कथं युज्यत इति—

अध्यासं विना विभावात्मनि ज्ञानसुखाद्युत्पत्तिर्न घटते
यितुं शक्येत्याह—गुणा इति । ये ज्ञानादयो आत्मनो मनःप्र
त्वन्मतेऽभिमतास्तेषामुत्पत्तिस्तत्रात्मनि विभौ त्वया कथंत्व
भो वादिन् ! वदेति सम्बन्धः । अयमर्थः—गुणस्य निर्माध
यावद्द्रव्यभावी दृष्टः, यथा परमाणुगतरूपादिः; यथा हि
संख्यापरिमाणादिः । न चाऽऽत्मगतसंयोगविभागयोर्व्याध
वाच्यम्, तयोरद्यापि सद्भावस्यैवाऽनिश्चयात् । यदा
ज्ञानसुखादयो जायमाना देहाद्यवच्छिन्नदेशादन्यत्र जायेरन्
सर्वं कारणत्रयमपेक्ष्यैव जायते, तत्र ज्ञानादेर्गुणस्यात्मा स
णम्, मनःसंयोगोऽसमवायिकारणम्, अदृष्टादि निमि
ततश्च हृदयदेशावस्थानान्मनसो हृदयावच्छिन्नात्मदेशे
त्तत्रैव सुखादयो जायन्ते न तथा संख्यापरिमाणादय इत्य
मनःसंयोगादिति । आत्मनो हृदयावच्छेदो नाम किमात्मस्वरूपम्
उत धर्मान्तरम् ? स्वरूपं चेत्, तस्य सर्वगतत्वात्सर्वत्र
जायेरन् । धर्मान्तरञ्चेत्, किं स्वरूपमात्रेऽवतिष्ठते ?
न्नदेशे ? आद्ये, तस्य सर्वात्मदेशव्यापित्वात्सुखादयः
द्वितीये, तस्याप्यवच्छेदान्तरापेक्षायामनवस्था । एवं
ध्यासमन्तरेण संसारोपलम्भ इति तात्पर्यार्थः ॥ १२ ॥

विभुत्वादात्माऽयं क्वचिदपि वियोगं न
न वा संयोगं सोऽनवयववपुर्मायिककृते
अदृष्टैः सम्बन्धो यदि तदपि सम्यङ् न घ
न दिक्शून्येऽदृष्टैरपि घटयितुं शक्यमुदि

एवमध्यासं विना सुखाद्युत्पत्त्यनुपत्तिं प्रदर्श्याऽध्यासमङ्गीकारयति—विभुत्वादिति । निरवयवं वपुः स्वरूपं यस्य स च मायाकार्याध्यासमन्तरा क्वचिदपि बहिरन्तर्वा संयोगं वा विभागं वा न भजते । अदृष्टैर्नियमोपपत्तिः स्यादित्यप्यसङ्गतम् । नहि अदृष्टैरपि निःप्रदेशे एवात्मनि प्रदेशविशेषजन्मवस्तुस्वभावस्याऽन्यथाकर्त्तुमशक्यत्वादित्यभिप्रेत्याह—अदृष्टैरिति । दिक्शून्ये निःप्रदेशे अदृष्टैर्धर्माधर्मरूपैरपि सुखादिसम्बन्धनियममुचितरूपं घटयितुं सम्पादयितुं नहि शक्यमिति योजना । तथा च प्रतिनियतसुखाद्युत्पत्त्यनुपपत्तिरेवाध्यासं गमयतीत्यर्थः ॥ १३ ॥

**अतोऽध्यासाद्योगो घटत उभयोरात्ममनसो-**
**स्तदाधारो बन्धोऽनृत इत इहाऽऽविद्यक इति ।**
**यतोऽध्यस्तोपाधौ तनुयुगल आभाति न विभौ**
**मरीच्यम्भोवीचीवदखिलमिदं भ्रान्तिकलितम् ॥१४॥**

तस्मादात्मनि प्रदेशविशेषप्रतिभासो विभ्रम एवेत्याह—अत इति । यस्मादपरिच्छिन्ने कथमपि प्रतिनियतसुखादिप्रतिभासोऽध्यासमन्तरेण न सम्भवति । अत उभयोरात्ममनसोरन्योऽन्याध्यासादेव योगः सम्बन्धो घटते सम्भवति । तदाधारस्तदन्योऽन्याध्यासाधीनो बन्धः सुखादिप्रतिभासरूपः, अनृतोऽनिर्वाच्यः, इतो हेतोरिहात्मनि आविद्यकोऽविद्याकार्य्यत्वादध्यस्तो यतो यस्मात्कल्पितोपाधौ शरीरद्वये आभाति अवभासते, न विभावात्मनि, इत्यतो हेतोर्मरीच्यम्भोवीचीवन्मृगतृष्णोदकसमुल्लसितवीचीतरङ्गमालावद् अखिलं जगदिदं सुखादिप्रतिभासरूपं भ्रान्तिकलितं मायाविजृम्भितमेवेत्यर्थः ॥ १४ ॥

**न यावच्छास्त्रं तत्त्वमसिमुखमालोच्य विधिना**
**परब्रह्मास्मीति स्वमकलमजं वेत्त्यनुभवात् ।**

स तावत्संसारं जनिमृतिमयं मायिकमिदं
सदित्येवं वेत्ति प्रबलतमसा संवृतमतिः।

यत्तूक्तमबाधितप्रतीतिगोचरत्वात् सत्य एव ... दुस्तर्काग्रहविलसितमित्यभिप्रेत्याह—नेति। यावत्तं ... स्यादिशास्त्रं विधिना सम्यग्गुरूपदिष्टोपक्रमादिलिङ्गैः ... त्मानम्, अकलं षोडशकलात्मकलिङ्गशरीरवर्जितम्, अजं ... भावविकारवत्स्थूलशरीररहितम्, परं ब्रह्मैवास्मीत्यनुभवात् ... रूपान्न वेत्ति; तावत्कालपर्यन्तं स पुरुषः प्रबलतमसा ... न्धकारेणाऽऽवृतमतिर्जन्मादिप्रचुरं संसारं मायाविकारं ... दिभिरवगतमर्थक्रियासमर्थत्वेनानुभूयमानतया सदित्येवं ... संसृतिभाग् भवतीत्यर्थः ॥ १५ ॥

मृषात्वं विश्वस्य श्रुतिरपि वदत्येव शतशः
प्रतीचोऽपि ब्रह्माद्वयसुखघनात्मत्वमिति
मनुष्यत्वाद्यात्मन्यनृतमखिलं बाध्यत इतो
न सत्यः संसारोऽप्यनुभवत इत्येव फलितम्

जगतो मिथ्यात्वे प्रत्यगात्मनो ब्रह्मत्वे च सकलप्रमाणमूर्धन्यं प्रमाणमित्याह—मृषात्वमिति। "अतोऽन्यदार्तम्" (बृ० ३।...) ... नास्ति किञ्चन" (बृ०४।४।१९) इत्यादिश्रुतिरपि शतशो ... श्वस्य कार्यकारणात्मकस्य मिथ्यात्वं वदति "तत्त्वमसि" ... ८।७) "अयमात्मा ब्रह्म" (बृ० २।५।१९) "अहं ... (बृ० १।४।१०) इत्यादिश्रुतिः सहस्रशो यद्ब्रह्माद्वयसुखघनं ब्रह्मतत्त्वमेकरसं तदात्मत्वं प्रतीचः प्रत्यगात्मनो वदति ... वेदान्तजन्यबोधेनात्मन्यखिलं मनुष्यत्वादिविभ्रमात्मकं ... इतस्तत्त्वज्ञानबाधान्यथानुपपत्तेर्न संसारसत्यत्वम्, लोके ...

नुपपत्तेः सर्पादेः मिथ्यात्वं दृष्टम्, ततोऽनुभवादपीत्येव फलितम् । रोऽध्यासकृत एवेति सिद्धमित्यर्थः ॥ १६ ॥

वाऽध्यक्षादीनां निगमहृदयं ह्यन्यथयितुं
कदाचित्सामर्थ्यं निरतिशयतत्त्वावगमकम् ।
स्वयंज्योतीरूपे निरवधि सुखे संसृतिरियं
मृषैवातोऽध्यासाद् भ्रमभयनिधिः स्वात्मनि पदे ॥१७॥

प्रत्यक्षादिप्रमाणबलेन संसारसत्यत्वापादनं दुर्घटमित्याह—न । प्रत्यक्षादिप्रमाणानां प्रातिभासिकसंसारविषयाणां प्रमाण-त्ववेदान्ततात्पर्य्यनिरतिशयतत्त्वावगमकतया परमपुरुषार्थपर्यव-र्षसिद्धान्तमन्यथाकर्त्तुं हि यस्मात्सामर्थ्यं कदाचिन्न चाऽस्तीति न्यः । अतः स्वयंज्योतीरूपे स्वात्मनि निरवधिसुखस्वरूपे इयं तेर्भ्रमभयनिधिरतीवदुस्तरत्वेन भासमाना अध्यासादेव मृषैव न सतीति योजना ॥ १७ ॥

अधीतस्वाध्यायैर्विदितपदवाक्यार्थनिपुणै-
र्महावाक्यं श्रुत्वा सपदि परमात्मैक्यविषयम् ।
स्वयं लब्धुं शक्यं विमलमपरोक्षं भ्रमहरं
विपश्चिद्भिर्ज्ञानं परमपदविश्रान्तिजनकम् ॥१८॥

अपरोक्षस्वभावे आत्मनि परोक्षज्ञानस्य भ्रान्तत्वादपरोक्षज्ञानस्य णत्वेऽपि तदुत्तरकालं परमार्थप्रमाणव्यवहारानुदयात् संसारस्य यात्वे प्रमाणानुपपत्तिरित्याशङ्क्याह—अधीतस्वाध्यायैरिति । गृहीत-पदार्थसम्बन्धस्य न्यायविदो वाक्यश्रवणानन्तरमपरोक्षज्ञानमेवा-ने समुत्पद्यते, नहि पुनः परोक्षज्ञानम्; ततश्च तत्त्वज्ञाननिवर्त्यान्य-नुपपत्तिरेव प्रपञ्चमिथ्यात्वे प्रमाणमिति तात्पर्यार्थः ॥ १८ ॥

परन्त्वात्मज्ञानं प्रभवदपरोक्षं नृमनसां
विशुद्धेर्वैषम्याद् दृढतरमिदं नैव यदि
तथापि श्रुत्यन्तप्रकटितमृषात्वं जगदिदं
विभौ नास्तीत्येवं दृढमतिरुदेत्येव सु

तर्हि विदितपदपदार्थानां श्रुतवेदान्तानामपि इ दर्शनमित्याशङ्क्य पुरुषबुद्ध्यपराधादेवेत्याह—परन्त्व परोक्षज्ञानमात्मनि प्रभवदपि साक्षात्विपर्ययबाध जायमानमपि नृमनसामधिकारिजनान्तःकरणानां इ दृढतरं भवति । ततश्चाऽऽत्मनिर्विचिकित्सानुभवफल तात्पर्यवद्वाक्यप्रामाण्यादेव पूर्वमपि संसारस्य उपपद्यत इत्याशयेनाह—तथापीति । श्रुत्यन्तैः श्रुति प्रकाशितं मृषात्वं यस्य तत् । "तरति शोकमात्मवित् १ । ३ ) इत्यादिश्रुतयः प्रपञ्चमिथ्यात्वमन्तरेणाऽनुपपन्न प्रपञ्चमिथ्यात्वे प्रमाणम् । ततश्चेदं जगद्विभौ पर वस्तुत इत्येवं दृढमतिः शास्त्रीयदृढनिश्चयः सुधियां दोषतया विवेकादिसाधनसम्पन्नानां प्रज्ञानामुदेत्येव प्र तथा चाप्रतिबद्धात्मतत्त्वसाक्षात्कारपर्यन्तं विपर्यासस परमिति भावः ॥ १९ ॥

दृढे बोधे जाते निखिलजगदाभासविल
स्वतः सिद्धो ब्रह्मामृतसुखपदस्यस्य
अतोऽविद्वत्पुंसोऽनधिगतपरात्मैक्यबर
विबोधार्थं शास्त्रं ह्युपदिशति यागादि

श्रवणादिसकलसाधनसम्पत्तौ पुनरशेषप्रतिबन्ध चिकित्सात्मानुभवे सति तद्विपरीतसंसारप्रति

ह—दृढ इति । इष्टानिष्टप्राप्तिपरिहारयोर्मिथ्यात्वे सति तत्सा-
धयि शास्त्रमनर्थकमिति यदुक्तं तत्राह—अत इति । यस्माद-
ऽशुद्धचित्तस्य तत्त्वज्ञानेऽधिकाराभावात् संसारसत्यत्वप्रतिभासः,
ऽविद्वत्पुंसोऽनाधिगता परमात्मैक्यसरणिर्ब्रह्मात्मैक्यज्ञानमार्गो
तस्य विबोधार्थमन्तःकरणशुद्धिद्वारा ब्रह्मबोधार्थं शास्त्रं कर्म-
डं हि यस्माद्यागादिकरणमुपदिशतीति सम्बन्धः । अयमर्थः—
भ्रान्तपुरुषाभिप्रायमनुसृत्य श्येनादिसाधनविधानं तदनुष्ठानं
प्राप्तिश्च दृश्यते । तथैवाऽऽत्मविज्ञानात्प्रागनाद्यविद्यया कर्म्मफलेषु
र्थत्वमध्यारोप्य, तत्राऽभिनिविशमानस्य भ्रान्तस्यैवाभिप्रायमनुसृत्य
नविधानादिसर्वमाबाधादुपपद्यते । तथा श्रुतौ वेदान्तस्यापि प्रति-
बाहुल्ये सति ऐकात्म्यशास्त्रमपि फलपर्यन्तं विज्ञानं न जनयति,
दिच्चपिताखिलप्रतिबन्धस्य पुरुषस्य तु जनयतीति न काचिदनुप-
रिति ॥ २० ॥

अविद्याध्यस्तोऽयं जनिमृतिमयो बन्ध उदितः
प्रतीचीतो मुक्त्यै शमदमतितिक्षादिगुणकम् ।
पुमांसं संश्रित्य भ्रमतिमिरविध्वंसिकरणं
मतः शास्त्रारम्भोऽपरिमितपदावस्थितिफलः ॥२१॥

यत्तूक्तं संसारसम्बन्धादात्मनि पारमार्थिकविशेषाभ्युपगमे संसा-
ापि तथात्वप्रसङ्गात् अनभ्युपगमे संसारभावाभावयोरात्मन एक-
त्वान्न संसारनिवृत्तये शास्त्रमारब्धव्यमिति तदप्यागमाशयानव-
जृम्भितमित्याह—अविद्येति । आत्मनि संसारबन्धस्यैव
रोपत्वात्, तस्य च वस्तुतोऽभावेऽपि भ्रान्त्या प्रतीयमानत्वात्, सत्य-
थ्यात्वयोरपि संसारस्यात्मनि प्रतिभासमानतयैवानर्थत्वात्; तन्निवृत्तये
ारम्भोपपत्तिरनवद्यैवेति तात्पर्यार्थः । अक्षरार्थस्तु प्रतीचि प्रत्य-

गात्मनि जनिमृतिप्रचुरोऽयं कर्तृत्वादिरूपो बन्धोऽपि ज्ञानेनैव परिकल्पित उदितो विद्वद्भिरिति शेषः। मोक्षसिद्धये शमदमतितिक्षादिगुणविशिष्टं मुमुक्षुं संश्रित्याऽऽत्मज्ञानाधिकारित्वेनाश्रित्य भ्रमतिमिर मज्ञानं विध्वंसयितुं स्वोत्पत्तिमात्रेण बाधितुं शीलमस्य ज्ञानं तस्य जनकतया करणं साधनं शास्त्रारम्भ प्रधानम् "अथातो ब्रह्मजिज्ञासा" (ब्र० सू० १।१ शास्त्रं तदारम्भो भगवद्व्यासस्य मतोऽभिमतः। ब्रह्मतत्त्वं तद्रूपेणावस्थितिर्मोक्षस्तत्त्वज्ञानजननद्वारा तथेति ॥ २१ ॥

श्रुतीनां प्रमाण्यादवगतमृषात्वस्य जगतो
वभासस्यात्मन्यध्यसनकरणं ज्ञानमसु
अतोऽध्यासादेवाखिलविकृतिसंसारकलना
चिदानन्दे भातीत्यपि निगमविद्वं

यदप्युक्तं रज्ज्वादौ सर्पाद्यध्यासे विषयकरणादि रपि विषयत्वाच्च भवेदपि भ्रान्तिः, आत्मन्यनात्मा ज्ञानस्य करणस्य चाऽऽत्मव्यतिरेकेणाभावात्, आत्मन द्रष्टृत्वाच्च, न तत्र भ्रान्तिसम्भव इति तत्राह—श्रुती रीदृशस्यावभासस्याविद्याध्यासात्मकत्वे सकलवेद निश्चिते सति आत्मनि बाह्याऽध्यासनिमित्तकारणाभावे गतानिर्वचनीयाज्ञानमेव कार्यान्यथानुपपत्त्या कारणं काचिदनुपपत्तिरिति तात्पर्यार्थः। अक्षरार्थस्तु श्रुती प्रामाण्यादेवावगतमवबुद्धं मृषात्वं मिथ्यात्वं यस्य भौतिकप्रपञ्चस्य तदवभासस्य चात्मनि प्रत्यगभिन्ने

ऽर्थाध्यासस्य ज्ञानाध्यासस्य च करणं कारणं हि यस्मादान्ध्यम-
मनाद्यनिर्वाच्यमविद्यादिशब्दवाच्यमुदितं कथितं विद्वद्भिरिति
:। यतः सदसतोर्ज्ञाननिवर्त्यत्वं नास्ति, यस्माच्च "तरति शोक-
मवित्" ( छा० ७ । १ । ३ ) इत्यादिश्रुतेरात्मज्ञानेनैव शोकोपल-
स्य संसारसमुद्रस्य तरणं श्रूयते । अत आत्मज्ञाननिवर्त्योऽज्ञान-
ध्यासादेवाऽखिलविकाररूपस्य संसारस्य जन्ममरणप्रवाहरूपस्य
ना कल्पना चिदानन्दे स्वप्रकाशसुखस्वरूपे प्रत्यगात्मनि भाति
यते—इत्यपि निगमसिद्धं नययुतं युक्तियुक्तञ्चेत्यर्थः । अपिशब्देन
पि वेदान्ता अद्वितीये ब्रह्मण्येव प्रमाणम्, नाऽज्ञानतत्कार्याध्या-
, तथापि तत्प्रामाण्यान्यथानुपपत्त्या अज्ञानतत्कार्यमध्यासश्च
यते । न तु साक्षात्तन्निगमसिद्धमध्ययनविधिविरोधादिति
यते ॥ २२ ॥

प्रपञ्चो व्योमादिस्त्वयमनृत आविद्यकतया
विवर्त्तश्चिद्व्योम्नः प्रकृतिशबलस्येशितुरितः ।
यथा स्वाप्नं विश्वं दृशि कलितमाविद्यकतयाऽ-
वबुद्धेऽधिष्ठाने न च जगदभून्नास्ति भविता ॥२३॥

नन्वस्तु जीवाविद्याकल्पितत्वात्तद्गतसंसृतेर्मिथ्यात्वम्, आकाशा-
पञ्चस्यानादिसिद्धतया प्रत्यक्षादिभिरनुभूयमानस्य कथं मिथ्या-
स्यात् ? तथा च तस्मिन् सत्यत्वेनानुभूयमाने सति कथं मुक्तिः ?
शङ्क्याह—प्रपञ्च इति । व्योमादिप्रपञ्चस्त्वयम्, तु शब्द
निवृत्त्यर्थः, यतोऽयमनृतः सद्विलक्षणः सदसद्भ्यां निर्वक्तुमशक्य-
दनिर्वाच्य इति यावत् । तथात्वञ्चाऽस्याऽनिर्वाच्याऽविद्याकार्यत्वा-
ाह—आविद्यकतयेति । नन्वीश्वराश्रितमायाकार्यत्वात्प्रपञ्चस्य
आविद्यकत्वम् ? इत्यत आह—प्रकृतिशबलस्येति । प्रकृतिर्माया

अविद्याऽज्ञानादिशब्दवाच्या तदुपहितस्येश्वरस्य [illegible]
त्रस्य ब्रह्मणो विवर्त्तोऽन्यथाप्रतिभासः, "तत्त्वादच्युतत[illegible]विव
विवर्त्तः" इत्युक्तेः। यथा सर्परजताद्यात्मना रज्जुशु[illegible]
इति भावे कर्म्मणि च घञ्। तेन ज्ञानाध्यासविषया[illegible]ऽय
तथा च सा मायैवाऽविद्या, नान्या, तयोर्लक्षणसाम्या[illegible]
विरोधित्वे सति विपरीतावभासहेतुत्वरूपं लक्षणमुभय[illegible]
न च "स्वाश्रयव्यामोहहेतुरविद्या", "तमव्यामोह[illegible]
तुर्माया" इति लक्षणभेदाद् भेदोऽस्त्विति वाच्यम्।
तत्त्वज्ञानप्रयुक्तत्वात्, अङ्गुल्यावष्टम्भादिना बुद्धिपूर्वकतृ[illegible]
दर्पणे मुखादिप्रतिभासे चाविद्याया अपि स्वाश्रयव्यामोह[illegible]
एव कर्त्तुः स्वातन्त्र्यपारतन्त्र्याभ्यामपि न भेदप्रत्या[illegible]
स्वाविद्याश्रयत्वे भ्रान्तत्वापत्तिरपि निरस्ता, विरोध[illegible]
विपर्य्ययस्यैव भ्रान्तत्वापादकत्वात्। अन्यथा भ्रान्त[illegible]
पत्तेः। तस्मात्—

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।
योगी मायागमेयाय तस्मै विद्यात्मने नमः॥

इति स्मृतावविद्यां मायामिति सामानाधिकरण्यात्, [illegible]
न मायाविद्ययोर्भेदः। व्यवहारभेदस्तु स्वाश्रयव्यामोह[illegible]
धिभेदादुपपादनीय इति विवरणाचार्य्याः। आचार्य्[illegible]
स्तु—"प्रतिजीवमविद्याभेदमङ्गीकृत्य व्यष्टिरूपेणाश्रयत[illegible]
साऽविद्येत्युच्यते, समष्टिरूपेण विषयतया तु ब्रह्मणि सा [illegible]
शुद्धचैतन्यमात्राश्रयविषया सेति संक्षेपशारीरकाचार्या[illegible]

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव [illegible]
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि [illegible]

(सं० शा० ३१९) इति वचनात्। इत्यत्र [illegible]
अपि घटाद्यधिष्ठानचैतन्यमेव विषयो न तु घटादि,

रणप्रसक्त्यभावेन तत्रावरणकृत्याभावादिति बोध्यम्। एवं प्रपञ्च-ाविद्यकत्वं सम्भावयितुं दृष्टान्तमाह—यथा स्वाप्नमिति। दृशि रि कल्पितं स्वाप्नं विश्वं रथादिरूपं यथाऽऽविद्यकतयाऽनिर्वाच्यम्, ाऽयमित्यर्थः। तत्त्वज्ञानमात्रेण निवृत्तिश्रवणादपि तस्यानिर्वाच्य-मित्याह—अवबुद्ध इति। अधिष्ठाने प्रत्यगभिन्ने ब्रह्मणि साक्षा-ते जगन्नासीत्, नास्ति, न भविष्यतीति त्रैकालिकबाधविषयतां भजते र्थः॥ २३॥

**यतो वेति श्रौतं जगदुदयरक्षाप्रलयकृ-**
**न्नचान्यच्चिद्धातोरिति हृदयमाश्रित्य वचनम्।**
**जडानां स्वातन्त्र्यं क्वचिदपि न दृष्टं तत इदं**
**स्वमायाशक्त्यैवा रचयति जगद् ब्रह्म सकलम्॥२४॥**

ननु "यतो वा इमानि भूतानि जायन्ते" ( तै० ३। १ ) "यतः र्वाणि भूतानि" (म० भा० अनु० अ० २५४। ११) "जन्माद्यस्य यतः" ० सू० १। १। २) इत्यादिश्रुतिस्मृतिन्यायकदम्बैर्ब्रह्मणः सकाशा-द्यतो जन्मादिप्रतिपादनात् कथं तस्याऽनृतत्वम्? इत्याशङ्क्याह—ा वेति। "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रौतं वचनं द्धातोश्चिन्मात्राद् ब्रह्मणोऽन्यः कश्चिज्जगज्जन्मादिकृन्नास्तीति तात्प-र्यमाश्रित्यैव भवति। "यतो वा" इति श्रुतौ 'इमानि' इति भूतविशेषणम्। न नामरूपाभ्यां व्याकृतं मनसाऽप्यचिन्त्यरचनादीत्येवंभूतधर्म्माः समर्प्यन्ते। तैश्च धर्म्मैः प्रधानादेरचेतनात् परिच्छिन्नशक्तेश्च हिरण्य-गर्भादेर्जगतो जन्मादि न सम्भवतीति। 'यतो वा' इत्यादिश्रुतिस्तन्मूल-स्मृतिन्यायकदम्बश्च जडानां प्रधानादीनां स्वातन्त्र्यं क्वचिदपि कुत्रापि शे काले वा न दृष्टं श्रुतिस्मृतियुक्तिविचारणैवानुभवपथमवतरतीति ां जगत्कारणत्वनिषेध पर एव। नहि चेतनानधिष्ठितरथादेः स्वतः

प्रवृत्तिदृष्टेत्यर्थः । फलितमाह—तत इति । ब्रह्म
सकलमिदं जगदारचयतीति योजना । तथा च
कार्यत्वप्रतिपादने तात्पर्याभावान्मायिकत्वापरपर्या
मिथ्यात्वं प्रपञ्चस्येति भावः ॥ २४ ॥

असङ्गोदासीनं सुखघनमनन्तं समपदं
विना मायां विश्वं प्रति कथमिदं हेतु
अतोऽध्यस्तां मायामनृतजडहेतुत्वमुदि
समादाय ब्रह्माद्वयसुखनिधेः श्रौतव

"तदेतद् ब्रह्माऽपूर्वमनपरम्" ( बृ० २ । ५ । १९
सिद्धं कार्यकारणभावशून्यं ब्रह्म जगद्धेतुमायाधिष्ठा
जगत्कारणमित्याह—असङ्गेति । अनन्तमपरिच्छिन्नं ।
मत्यन्तासम्भावितप्रदर्शिनीमनेकशक्तिमविद्यां विना
शादिप्रपञ्चं प्रति हेतुरुपादानं निमित्तं वा भवितुमि
ननु कुलालादिर्घटादिकार्यं रचयन्नाऽविद्यामपेक्षते,
जगन्निर्मास्यति विनैव मायामिति तत्राह—असङ्गेति ।
कारणादिसम्बन्धस्तद्रहितोऽसङ्गः, "असङ्गो ह्ययं पुरुषः" (बृ
३ । १४ ) इत्यादिश्रुतेः । ननु "तत्तेजोऽसृजत" (
३ ) इत्यादिश्रुतेरीश्वरस्य कर्तृत्वप्रतीतेरसङ्गत्वमसिद्धमि
उदासीनमिति । अकर्तृरूपमित्यर्थः । ननु दासी
तत्प्रयुक्तसङ्गो वा, अन्यथोदासीनमेव न स्यादिति भा
प्रयोजनमुद्दिश्य कार्यं करोति । प्रयोजनं चेश्वरस्य किं
सुखं वा ? नाद्यः, तस्य स्वतः सिद्धत्वात् । न द्वितीयः
घनमिति । ततश्चोभयविधप्रयोजनशून्यत्वादुदासीन
प्रभृतिकर्तृत्वमीश्वरस्य न युक्तमित्यर्थः । एवं

णः पराकृत्योपादानत्वं निरस्यति—समपदमिति । विचित्र-
त्मकत्वेन विषमकार्य्यं प्रति समं निर्विषमं यत्पदं तत्कथमुपादानं
त् ? "वैचित्र्यञ्च समस्य न" इति न्यायेन विचित्रकार्य्यं प्रति
चित्रमेव कारणं युक्तम्, न तु सममित्यर्थः। जगन्निर्माणं चेश्वराच्छ्रू-
"यतो वा" इत्यादिश्रुतेः । अतो ब्रह्मण्यध्यस्तां मायां समा-
र श्रौतवचनैर्ब्रह्माद्वयसुखनिधेः परिपूर्णाद्वैतानन्दसमुद्रस्याऽनृतत्वेन
त्वेन च प्रसिद्धं विश्वं प्रति हेतुत्वमभिन्ननिमित्तोपादानत्वमुदित-
ति योजना । न हि जडानृतदुःखानेकविधप्रपञ्चं प्रति सत्य-
नानन्तानन्दासङ्गोदासीनस्य ब्रह्मणो मायामन्तरेण कथञ्चिदपि
रणत्वं सङ्गच्छते इति सृष्टिश्रुतीनामपि स्वार्थे तात्पर्याभावादिति
यः ॥ २५ ॥

न तत्र प्रामाण्यं निगमशिरसां ब्रह्ममनसा-
मपूर्वाव्यावृत्ताद्वयपदवबोधोदयधियाम् ।
प्रधानाणुवादीनां जडमतिमतानां निरसने
गभीरे तात्पर्य्यं श्रुतिहृदयविज्ञाशय इति ॥२६॥

ननु "सदेव सोम्येदमग्र आसीत्" ( छा० ६ । २ । १ )
तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" ( तै० १ । २ । १ )
यतो वा" ( तै० ३ । १ ) इत्यादिसृष्टिश्रुतीनां ब्रह्मजगतोः कार्य्य-
रणभावप्रतिपादनपराणां स्वार्थे तात्पर्य्यं किन्न स्यात् ? इत्याशङ्क्-
याह—नेति । तत्र कार्य्यकारणभावे निगमशिरसां वेदान्तानां
प्रामाण्यम्, तत्र हेतुगर्भं विशेषणं—ब्रह्ममनसामिति । ब्रह्मण्य-
तीये मनस्तात्पर्य्यं येषाम् । तथा च समन्वयविरोधान्न तत्र कस्यापि
तिवाक्यस्य तात्पर्य्यमित्यर्थः । ननु किमर्थं तर्हि कार्य्यकारण-
वः श्रुत्योच्यते ? तस्य तात्पर्य्यवहिर्भूततया वैयर्थ्यादिति नेत्याह—

अपूर्वेति । न विद्यते पूर्वं कारणं यस्य तत्, अन्यावृत्ते
तीयभेदशून्यतया कुतश्चिदपि भिन्नं न भवति तत्
द्वैतशून्यम्, सद्ब्रह्म, तदपूर्वाऽन्यावृत्ताद्वयसत् तस्यावबोधः
स्योदये प्रादुर्भावे धीस्तात्पर्य्यं येषाम् । तथा च "अध्या
निष्प्रपञ्चं प्रपञ्च्यते ।" इति न्यायेन कार्य्यकारणयोः
सिद्ध इति कार्य्यकारणभावमारोप्याऽद्वितीये वस्तुनि
सिद्धये श्रुतीनां तथा वर्णनं सङ्गच्छते । न साक्षात्
सम्भवति । येन तथा न वर्णयेयुरिति भावः ।
परिकल्पितप्रधानपरमाण्वादीनां जडा शास्त्राचार्योपदेशे
मन्दा मतिर्येषाम् । यद्वा, जडेषु प्रधानपरमाण्वादिषु
येषाम् । तदभिमतानां निरसने निराकरणे सति निष्प्रपञ्चे
परिच्छिन्ने ब्रह्मणि तात्पर्य्यं "यत्परः शब्दः स श
न्यायेन सिद्धयतीति शेषः । इत्येवं श्रुतीनां हृदयं ब्रह्म
स्तत्साक्षात्कारवन्तस्तेषामाशयस्तात्पर्य्यमित्ययमेवेत्यर्थः

यदि द्वैतं सत्यं भवति कथमद्वैतवचसां
भवेत्प्रामाण्यं तद्ध्यनधिगतवस्त्वैक्यविषया
कथं वाऽतो मोक्षो जनिमृतिमहानर्थनिवहान्
न्मुमुक्षूणां यस्मात्कथमपि लयं नैत्यविद्या

ननु किमर्थमाग्रहेण श्रुतीनामद्वैते ब्रह्मण्येव तात्पर्यं
द्वैतमिथ्यात्वसिद्धये इति चेत्, तन्न; द्वैतस्य सत्यत्वेऽपि
स्वार्थे प्रामाण्योपपत्तेः । न वा मोक्षसिद्धये तथावर्णनम्
मोक्षोपपत्तेश्च । किञ्च, द्वैतमिथ्यात्ववर्णनं न तावद् ब्रह्म
त्वाय शास्त्रप्रामाण्यात् सत्यस्यापि ज्ञानान्निवृत्तेः । न
ऽसंसारिब्रह्मैकत्वार्थमौपाधिकस्य संसारस्य सत्यस्य

त्तौ जीवस्य ब्रह्मैक्यसम्भवादित्याशङ्क्याह—यदीति । यदि सत्यं स्यात्तर्ह्यद्वैतवचसां "एकमेवाऽद्वितीयम्" (छा० ६ । २ । १ ) त्वमसि" (छा० ६ । ८ । ७) "अयमात्मा ब्रह्म" ( बृ० २ । ५ । १९) ह्मैवेदं विश्वम्" (मु० २ । २ । ११ ) इत्याद्यद्वैततत्त्वप्रतिपादकवेदान्त-स्यानां प्रामाण्यमनधिगतं प्रमाणान्तरैरविषयीकृतं यद्वस्तुनोऽनारोपि-य ब्रह्मण ऐक्यमखण्डैकत्वं तद्विषयं तदेकमात्रगोचरं कथं स्यादिति बन्धः । कथं वा द्वैतसत्यत्वे सति अतो द्वैतरूपबन्धाज्जन्ममृत्युप्रवाह-नर्थनिगडाद् दुरुच्छेद्यपाशाद् मुमुक्षूणां मोक्षः स्याद् ? यस्मात्कथम-वितथं कालत्रयेऽप्यबाध्यं वस्तु लयं नैवेति न विनश्यतीत्यर्थः । सत्यस्या-दनिवृत्तेः, द्वैतरूपबन्धस्यापि तथात्वात्; ततः कथमपि मोक्षो न ादिति भावः । न च सत्यः प्रपञ्चो ज्ञाननिवर्त्य इत्यागमोऽस्ति । युत बन्धस्य ज्ञाननिवर्त्यत्वश्रुतार्थापत्त्या मिथ्यात्वप्रसिद्धेः । न च र्क्ष्यध्यानादिना सत्यस्यापि विषादेर्निवृत्तिर्दृष्टेति वाच्यम् , विषादेः त्यत्वासिद्धेः । ननु सर्वः प्रपञ्चोऽमिथ्येति त्वन्मते विषस्य सत्यत्वा-द्धिरस्तु नाम । तथापि विषस्य मिथ्यात्वं न तार्क्ष्यध्याननिव-र्त्यत्वप्रयुक्तं त्वयेष्यते । किन्तु प्रपञ्चमिथ्यात्वसाधकप्रमाणान्तरप्रयुक्त-ष्यते । तथा च तार्क्ष्यध्याननिवर्त्यत्वं विषस्येव ब्रह्मज्ञाननिवर्त्यत्वं सारस्य मिथ्यात्वे प्रयोजकं न स्यादिति चेत्, न; ध्यानस्याप्रमात्वेनाऽ-ष्टान्तत्वात् । तथाहि—ब्रह्मज्ञानपरीक्षितप्रमाणमूलकं प्रमारूपमेव सारनिवर्त्तकम्, "वेदान्तविज्ञानसुनिश्चितार्थाः"(कै० ३ । २ । ६) इत्या-श्रुतेः; ब्रह्मविद्योपक्रमाम्नातगुरुशिष्यनिबन्धबहुपाख्यानगतयावत्संश-निवृत्तिप्रश्नोपदेशतत्तदुपपत्त्युपन्यासलिङ्गाच्च; तत्प्रमात्वस्थिरीकरणापे-क्षितासम्भावनादिनिवृत्त्यर्थप्राप्तश्रवणमननध्यानानुवादलिङ्गाच्च । तार्क्ष्य-ानस्य तु कल्पिताकल्पितसाधारणयथोपदिष्टार्थविषयस्य विषनिव-र्त्कत्वे प्रमात्वं नापेक्षितमिति दृष्टान्ताऽसम्प्रतिपत्तिरिति । ननु "सेतुं द्वा समुद्रस्य ब्रह्महत्या निवर्त्तते" इति स्मृतेः सेतुदर्शनं प्रमारूपमेव

सत्यस्याऽघस्य निवर्त्तकं दृष्टम्, तथात्राप्यस्तु, का क्षतिः, न; सेतुदर्शनञ्च चोदितक्रियात्मनैवैनोनिवर्हकम्, मपि सेतुं म्लेच्छानां श्रद्धाविरहिणां वाऽद्यानुपघातान् दृष्टद्वारेण बन्धनिवर्तिनी, न विधिद्वारा, तद्विधेः च्छिर्निराकृतत्वादित्यलं विस्तरेण ॥ २७ ॥

जगन्मिथ्यात्वे तु श्रुतिशतशिरोगीर्वि
भजेत्प्रामाण्यञ्च व्यवहृतिरपीयं हि
मृषाबन्धं बोधो विदलयति मोक्षोऽपि
परब्रह्माद्वैतं व्रजति न च कोपं श्रुति

प्रपञ्चमिथ्यात्वे तु सर्वमनवद्यमित्याह—जगन्मिथ्या शोकमात्मवित्" ( छा० ७ । १ । ३ ) "ब्रह्मविदाप्नोति २ । १ ) "ब्रह्म वेद ब्रह्मैव भवति" ( मु० २ । ९ ) इत्यादि रविकलं यथा स्यात्तथा प्रामाण्यं भजेत् । अन्यथा संसारस्यात्मज्ञानेन तरणोक्तिर्ब्रह्मज्ञानमात्रेण जीव ब्रह्मभावप्राप्तिकथनञ्च बाध्येत । तथा सति गिरां प्रामाण्यं स्यादित्यर्थः । सर्वेषां वेदान्तानां ब्रह्मणि । शास्त्रस्य प्रथमाध्यायार्थः श्रुतिशतेत्यादि शतशब्द आनन्त्यपरः, "विश्वं शतं सहस्रञ्च सर्व इति महाभारतवचनात् । "ब्राह्मणशतं भोज्यताम्" स्येव शिरसा संख्योपसर्जनसंख्येयेनान्वयः । तु श्रुतीनां प्रामाण्यम्, व्यवहारस्तु न सेत्स्यति; भ्रम साधकत्वादर्शनात् । नहि मृगतृष्णाम्भः पिपासा मित्याशङ्क्याह—व्यवहृतिरपीति । किं भ्रमजनि ऽपि न व्यवहारसाधकत्वम् ? बाधकाले वा ?

स्वाप्नव्याघ्ररथादीनां तत्समये व्यवहारसाधकत्वं सर्वलोकसिद्ध-र्थः । बोधस्तत्त्वज्ञानं मृषाबन्धमनिर्वाच्याविद्याकार्य्यमविद्यानि-न विदलयति निवर्त्तयतीत्यर्थः । मिथ्याबन्धस्य तत्त्वज्ञानेन बाधि-त्स्वरूपावस्थानलक्षणो मोक्षः स्वतः सिद्धत्वात्सुलभः । श्रुतीनां तात्पर्य्यविषयोऽद्वैतं परब्रह्मतत्त्वं न च कोपं व्रजति—जगतो ात्वे सति एवैतत्सर्वं सिद्ध्यतीत्यर्थः ॥ २८ ॥

अविद्यायां सत्यामनृतमिदमेवं मतिरपि
प्रमात्राद्यध्यस्तं श्रुतिवचनजोदेति न ततः ।
क्रियाकाण्डे ज्ञानेऽप्यहमिति ममेत्याद्यनुभवात्
प्रवृत्तिः संसिद्धा अमयुतधियां वैदिकपथे ॥ २९ ॥

ननु जगतो मिथ्यात्वे "स्वर्गकामो यजेत" "तमेतं वेदानुवचनेन या विविदिषन्ति यज्ञेन" (बृ० ४ । ४ । २२) इति "शान्तो दान्त सीत" इत्यादिशास्त्रञ्च साध्यसाधनबोधकमनर्थकं स्यादित्याशङ्क्य शास्त्रानर्थक्यापादनं विद्वांसं प्रति ? आहोस्विद् अज्ञं प्रति ? नाद्यः, पत्तेः । न हि तज्ज्ञं प्रति किञ्चिच्छास्त्रं विधत्ते, तस्य कृतकृत्यतया ्यसाधनप्रत्ययबाधात् । द्वितीयश्चेत्, तत्राह—अविद्यायामिति । ामविद्यायां प्रमात्रादिजगदध्यस्ततयाऽनृतं मिथ्येत्येवं मतिर्निश्चया-का बुद्धिरपि श्रुतिवचनजन्या नोदेति । ततश्च मिथ्येदमिति ज्ञाना-ान् क्रियाकाण्डे "स्वर्गकामो यजेत" इत्यादौ कर्म्मप्रतिपादके शास्त्रे ेऽपि तत्त्वज्ञानसाधनप्रतिपादके शास्त्रे 'तमेतम्' इत्यादौ वेदान्त-ाररूपश्रवणादौ तत्त्वज्ञानसाधनेऽपि वैदिकमार्गे प्रवृत्तिश्रमणदेहाद्य-ानेन युता धीर्येषां तेषामहं ब्राह्मणोऽमुकशर्म्मेति, ममेदं गृहं कलत्र-वे, अहं विरक्तो ममायमाश्रम इत्याद्यनुभवादेव सम्यक्सिद्धा

२१

स्यादिति योजना । "सर्वाणि शास्त्राणि विधिनिषेधानां चाऽविद्वद्विषयाणि" इति भाष्यादित्यर्थः ॥ २९ ॥

परे द्वैतं युक्त्याऽप्यखिलमिदमध्यस्तम्
भवेद् भ्रान्तौ सत्यां व्यवहरणयोग्यं
क्षमा मिथ्याश्वाद्या व्यवहृतिपदे स्वप्न
प्रबोधे सा सत्त्वस्त्वनृतमवभासात्म

मिथ्यापदार्थोऽपि भ्रान्तिकाले व्यवहारसाक्षमाऽस्तु, बाधितानुवृत्त्याऽस्तु वेति दृष्टान्तावष्टम्भेन साधयति युक्त्याऽपि परे परमात्मनि इदं समस्तं द्वैतं प्रपञ्चात्मकम् अध्यस्तं कल्पितमेव भवेत् सिद्धेयत्, भ्रान्तौ सत्यां योग्यमपि नीलं नभ इति व्यवहारवत् । ननु नीलं नभ एकविध एव दृश्यते, प्रपञ्चे तु नानाविधविचित्र विषमो दृष्टान्त इत्यपरितोषाद् दृष्टान्तान्तरमाह—क्षमा व्यवहारगोचरे मिथ्याऽश्वगजादयोऽप्यारोहणादिविविध दृष्टाः । प्रबोधे तत्त्वसाक्षात्कारे जागरण इव व्यवहार तत्कारणस्य बाधादेव । यद्वा, बाधितानुवृत्त्याऽनृतमवि त्मकं प्रतीतिमात्रशरीरमिदं सर्वमस्तु वा, तेन का हानि

निजाज्ञानं देहाद्यखिलजगदाकारविकृति
ह्यवाप्तं ज्ञातं सज्जगदिदमनर्थाविर्भव
न चाज्ञातं किञ्चिद् व्यवहरणयोग्यं भवति
प्रतीतः प्राक् पश्चादपि न च भवेद्भ्रान्ति

प्रतीतिमात्रशरीरमित्युक्तमित्युपपादयति—निजाज्ञान मेव देहाद्यखिलजगदाकारेण विकृतिं परिणाममवाप्तं

द्वच्छुक्तिरूप्यरज्जुसर्पादौ तथात्वस्य द्योतकः । अत इदं जगद्देहादि-
मनर्थः प्रतिकूलरोगादिभिः, अर्थस्तत्तद्विषयभोगानुकूलस्वास्थ्यादि-
तद्विपयं तद्रूपमनर्थार्थरूपं ज्ञातमेव सद्भवति । न च प्रतीतेः प्राग-
मपि सत् किंचिद्वस्तु व्यवहारयोग्यं भवति । पश्चाद्वा प्रतीति-
यादूर्ध्वं न च भवति । तत्र हेतुः—भ्रान्तिजनितमिति । प्रतीति-
शरीरत्वाद् भ्रान्तिजन्यस्येत्यर्थः ॥ ३१ ॥

स एवायं कुम्भस्तदिदमिह वेश्मेति धिषणा
भवेत्साम्याद्यद्वद्युगपदहिभानं स्रजि नृणाम् ।
न चान्योऽन्याविद्याकृतभुजगमाज्ञातुमुचित-
स्तथाऽत्र द्रष्टव्यं तमसि किमसम्भावितमहो ॥ ३२ ॥

ननु द्वैतस्य प्रतीतिमात्रशरीरत्वे तदेवेदं गृहम्, सोऽयं घट इत्यादि-
भिज्ञा न स्यात्, तस्याः पूर्वसंस्कारसहकृतचक्षुरादिजन्यत्वादित्या-
क्याह—स एवेति । इह भूतले स एवायं कुम्भः, तदेवेदं गृह-
ति धिषणा प्रत्यभिज्ञा प्रातीतिकवस्तुनः प्रतीतिभेदेन भेदेऽपि साम्यात्
दीपज्वालेत्यादिवत्सादृश्याद् भवति । यद्वद् येन प्रकारेण बहूनां
णां स्रजि पुष्पमालायामहिभानं सर्पभ्रमावभासो युगपदेकदैव भवति ।
स्वस्वाविद्याकल्पितसर्पैक्याभावेऽपि यथा तेषामेक एव सर्पः
रैरनुभूयते । न च अन्याविद्याकृतभुजङ्गमन्य आज्ञातुमुचितः ।
न्यान्तःकरणप्रतिबिम्बितचैतन्यनिष्ठाविद्यात्मको भ्रमस्तदन्तःकरण-
र्निर्दुर्ज्ञेयत्वात्ततोऽन्येन ज्ञातुमशक्य इत्यर्थः । तथाऽत्रापि सत्यत्वेनाऽ-
मतव्यवहारभूमौ प्रातीतिकघटादीनां प्रतीतिभेदेन भेदेऽपि साद-
यादेव प्रत्यभिज्ञानं भविष्यतीति नानुपपत्तिरित्यर्थः । ननु कथमेत-
यादित्यत आह—तमसीति । अहो आश्चर्य्यमेतत्, यत्त्वया स्वप्नादौ-
शिरश्छेदादिकमत्यन्तासम्भावितमनुभूयापि न सम्भाव्यते । तमसि

अज्ञानेऽघटितघटनाचतुरे किमसम्भावितम् ? इत्यर्थः ॥ ३२ ॥

**जगज्जाग्रत्काले विविधमनुभूयान्ध्यवशतः**
**सुषुप्तिं गत्वा स्यात्पुनरपि समुत्थाय**
**जगद्बुद्धिर्या सा जगदभिनवं गोचरयति**
**स्फुटं सादृश्यात् स्यात्तदिमिति बुद्धि**

प्रतीतिसमानयोगक्षेमस्य प्रपञ्चस्य ज्ञातमेव सत्त्वं द्रढयितुमवस्थासु प्रपञ्चभेदं साधयति—जगदिति। यैरर्थोपलब्धिलक्षणे विविधमान्ध्येनाज्ञानेन कल्पितं भुवं चित्रमनुभूय, सुषुप्तिं गत्वा, पुनरपि जागरे समुत्थाय, द्बुद्धिर्जगद्गोचरा प्रतीतिः स्यात्; सा प्रतीतिरभिनवं जगत्स्पष्टतया गोचरयति। तत्र तदिदं गृहमित्यादिबुद्धि श्यादेव स्यादिति योजना ॥ ३३ ॥

**नहि द्रष्टुर्दृष्टेरपि विपरिलोपो न तु**
**द्वितीयं वाऽन्यत्स्याद्यदयमपि पश्येदि**
**जगद्द्वैतं सुप्तावपवदति सत्यामपि दृशि**
**प्रपञ्चाभावोऽतः श्रुतिवचनसिद्धोऽस्ति**

ननु प्रत्यभिज्ञाया भ्रमत्वसाधिका युक्तिर्मूलप्रमाण ज्ञावस्थासु प्रपञ्चभेदं साधयितुं क्षमते इत्याशङ्क्य मूलत्वाज्ञाभासत्वमित्याह—नहीति। "नहि द्रष्टुर्दृष्टेर्विपरि लोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्य श्येत्" (बृ० ४। ३। २३) इति श्रुतेर्वचो दृशि द्रष्टुः सत्यामेव सुषुप्तौ जगद्द्वैतमपवदति निषेधति। अतः

द्रः सततमेव प्रपञ्चाभाव इति सिद्धान्तः । द्रष्टुरात्मनोऽविनाशित्वात्स्वरूपभूता दृष्टिरप्यविनाशिनीति सुषुप्तेऽप्यात्मा पश्यत्येव । तु यद् द्वितीयमन्तःकरणं प्रमातृ जाग्रदादौ पश्येत्, तदत्र नास्ति । ऽन्तकरणादप्यन्यच्चक्षुरादिकरणम्, तदप्यत्र नास्ति । यथा यच्च क्तं रूपादिविषयजातम्, तदप्यत्र सुषुप्तौ नास्तीत्यात्मनो विशेषदर्शनावो युक्तः, विशेषदर्शनकारणभूतानां प्रमातृविषयाणामभावादिति र्थः ॥ ३४ ॥

**तथान्या प्राणादेरनिशसवदत्सृष्टिमपि गी-**
**स्ततोऽवस्थास्वैक्यानुभव इह विश्वस्य च मृषा ।**
**न सर्पभ्रान्तेः स्याज्जगदनुभवे भेद उचितः**
**प्रतीतेरन्यन्न क्वचिदपि मृषाध्यासजनितम् ॥ ३५ ॥**

सुप्तोत्थितस्य पुनः प्राणादेः सृष्टिर्भवतीत्यपि श्रुतिसिद्धमित्याह—ते । यथा पूर्वोक्तश्रुत्या सुप्तौ सृष्टिविलयः कण्ठरवेणोक्तः तथैन्या श्रुतिः "स यदा प्रतिबुध्यते" इत्युपक्रम्यानिशं प्रत्यहं प्राणादेः सप्यवदत् वदति । "यदा सुप्तः स्वप्नं न कश्चन पश्यत्यथास्मिन् एव एकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः प्येति, स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं तिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" ( कौ० ३ । ३ ) इति श्रुतिप्रमाणादेवावस्थासु विश्वस्य घटादेः प्रपञ्चस्यैक्यानुभव इह हारभूमौ मृषैव । अत एव सर्पभ्रान्तेः सर्पभ्रमानुभवाद् जगदनुभवे उचितो न भवति, यतः प्रतीतेरन्यत्क्वचिदपि जाग्रत्काले स्वप्न-

काले भ्रमकाले वा मिथ्याध्यासजनितं वस्तु पृथक्...
शरीरत्वादित्यर्थः ॥ ३५ ॥

नन्ु भ्रान्तिज्ञानाज्जगदनुभवे कारण...
विशेषस्तद्वत्स्याद्विषयकृत आजान...
जगद्धीः प्रत्यक्षाद्यखिलबलसिद्धा भ्रमं...
भ्रमज्ञानं नैवं कथमिह तयोः साम्य...

भ्रमात् पूर्वं सर्पो न भवति तथेदं तु न ...
यतः पूर्वं तस्येन्द्रियविषयसंयोगत ...
मतं सत्त्वं लोकेऽविदितमपि नैवं भ्रम...
रतो भ्रान्तिज्ञानाज्जगदनुभवे भेद ...

तत्र दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं शङ्कते—...
यद्यपि भवदुक्तरीत्या प्रपञ्चभ्रान्तिज्ञानयोर्न भेदः ...
त्याजानतः स्वभावत एव रज्जुसर्पादिज्ञानादाकाशादि...
कृतो विषयकृतश्च विशेषोऽस्ति । प्रपञ्चज्ञानस्य प्रत्य...
त्वम्, सर्पज्ञानस्य त्वविद्याजन्यत्वम् । प्रपञ्चज्ञान...
घटादिः । सर्पज्ञानविषयः प्रतीतिमात्रशरीरत्वादि...
प्रपञ्चज्ञानस्येन्द्रियसन्निकर्षजन्यत्वात् ज्ञानात्पूर्वमपि ...
श्यकम् । न तु भ्रान्तिज्ञानस्येव प्रतीतिमात्रसत्त्वम् । ...
ज्ञानप्रपञ्चज्ञानयोर्बहुवैषम्यात् कथं तयोः साम्यमुक्तं ...
सङ्क्षिप्तार्थः ॥ ३६—३७ ॥

इति प्राप्ते ब्रूमो न भवति भिदा स्वाप...
यथा स्वाप्नाध्यक्षाद्यखिलबलसिद्धं ...

तथा जाग्रद्भूयं भ्रममयमिहाध्यक्षगमितं
न वाऽध्यक्षं हेतुर्जगदनुभवे सत्त्वजनने ॥ ३८ ॥

भ्रान्तिज्ञानप्रपञ्चज्ञानयोस्तद्विषययोः शङ्कितं वैषम्यं परिहरति—
वे । स्वाप्नज्ञानजाग्रज्ज्ञानयोस्तद्विषयोश्च भेदो न भवति । यथा
भ्रान्तिरूपाऽध्यक्षादिप्रमाणबलेन सिद्धं भ्रममयं स्वाप्नं वस्तु
जाग्रत्कालीनं विश्वं भ्रमकार्य्यमिह जागरे कल्पिताध्यक्षादिना
ज्ञापितम् । अतः प्रत्यक्षादिप्रमाणं जगतो घटादिविश्वस्यानुभव-
े यत्सत्त्वजननं तत्र हेतुर्न भवतीति योजना ॥ ३८ ॥

अविद्याकार्य्येऽस्मिञ्जगदनुभवे नास्ति किमपि
स्वतः सत्यं योगो विषयकरणादेरपि मृषा ।
यथा यक्षो लोके बलिरपि तथा भाणकमिति
स्वतः सत्ताशून्ये क्रियत इह सत्ता न करणैः ॥ ३९ ॥

त्रयोः साम्ये कारणसाम्यं हेतुत्वेनाह—अविद्येति । अस्मिन्
क्षादिसिद्धे जगदनुभवेऽविद्याकार्य्ये इति हेतुगर्भं विशेषणम्,
द्यकत्वात्किमपि वस्तु स्वतः सत्यं नास्ति, स्वाधिष्ठानवृत्तित्रैका-
ाभावप्रतियोगित्वात् । सर्वस्याप्याविद्यकस्य योगो विषये-
प्रसन्निकर्षविषयो घटादिः, करणानीन्द्रियाणि, आदिशब्देना-
ादेर्व्याप्तिलिङ्गादेश्च ग्रहणम् । सर्वेषामपि मृषात्वं वदन् सन्नि-
विषयकरणादेर्मृषात्याहत्य वदति । तेन प्रत्यक्षादिजन्यत्वं
ज्ञाने विशेष इत्युक्तं परास्तम् । नहि मिथ्याज्ञानकार्य्यस्य प्रपञ्च-
कं प्रत्यक्षादि सत्यम्, यतो लोके यक्षानुरूपो बलिरित्याभाण-
। न वा स्वतः सत्ताशून्ये वस्तुनि करणैरिन्द्रियादिभिः सत्ता
ते । नहि व्योम्नि स्वतः सत्ताशून्यस्य नीलवर्णादेः सत्ता स्वच्छ-
रादिभिरपि सम्पादयितुं शक्येति भावः ॥ ३९ ॥

भ्रमव्यावृत्तरवं न च जगति बाध्यत्व...
दतोऽन्यत्स्याद्वार्त्ता न च किमपि ना...
इति श्रुत्या कार्य्येऽनृततमशरीरत्वमुदि...
मरीच्यम्भो रज्जावहिरिव जगद्बाध्य...

न केवलं युक्त्यैव प्रपञ्चस्य मिथ्यात्वमपि तु श्रुति... भ्रमेति । जगति विषये भ्रमवैलक्षण्यं नास्ति, ... श्रुतिस्मृतिसहस्रैरिति शेषः । तत्र श्रुतिं दर्शयति—... ब्रह्मणोऽधिष्ठानादन्यदध्यस्तं कार्य्यकारणरूपं जगदा... त्रयेऽपि बाधितमिति यावत् । अत्रैव "नेह नाना... (बृ० ४ । ४ । १६) इति श्रुत्यन्तरमर्थतः पठति—... यदस्यार्थे विमले स्वच्छे ब्रह्मणि किमपि नाना ... नास्तीति श्रुत्या विश्वस्मिन्कार्ये भूतभौतिकप्रपञ्चे... मत्यन्तमिथ्यात्वमुदितं कण्ठरवेणोक्तम्, तस्मान्मरीचि... रज्जौ सर्प इव, ब्रह्मणि जगद्बाध्यम्—मिथ्यात्वेन ... चितमित्यर्थः ॥ ४० ॥

प्रमाणत्वेनैवाभिमतकरणानां भवतु ...
ऽखिलाधिष्ठानत्वादविदिततयात्मैव ...
जगन्नास्त्यज्ञातं ह्यतिजडतया ज्ञानवि...
प्रमाणानां यस्मादविदितपदार्थोऽस्ति...

एवं प्रपञ्चस्य भ्रान्तमात्रशरीरत्वं प्रसाध्य ... न्द्रियाणां प्रामाण्यमेव नास्तीति वक्तुमुपक्रमते—प्रमा... णत्वेनाभिमतानां चक्षुरादिकरणानामज्ञातार्थविषयता ... चाखिलविश्वाधिष्ठानत्वादविदिततयाऽज्ञातरूपेणात्मैव ...

ज्जगदज्ञानविकृतिरूपमत्यन्तजडतयाऽज्ञातं नास्ति, तस्याऽऽवृतैक-य पुनरविज्ञानविषयत्वलक्षणाज्ञातत्वकल्पने प्रयोजनाभावादित्यर्थः। दितपदार्थो यस्मात्प्रमाणानां विषयोऽभिमतोऽस्ति। तच्चाविदि-मधिष्ठाने प्रत्यक्तत्त्वे विश्रान्तमित्यर्थः ॥ ४१ ॥

न चाज्ञातः कुम्भः कथमिति तदेयं व्यवहृतिः
स साक्षिण्यध्यस्तो घटपटसुखो ज्ञानसहितः।
नहि ज्ञानाज्ञाने जडविषयमाश्रित्य सफले
स्वयंभानार्हेऽस्मिन्द्वयमपि कृतार्थं व्यवहृतौ॥४२॥

घटादौ जडवर्गेऽज्ञातत्वादिव्यवहारोऽप्यन्यथासिद्ध इत्याह—न। 'अज्ञातो घटः' इत्यादिप्रतीत्युपपत्तिस्त्वज्ञानेन सह साक्षिचैतन्ये रध्यासादिति स्वयंभासमानेऽस्मिन् साक्षिचैतन्ये ज्ञानाज्ञाने ते, न तु जडे, तत्र तयोर्निष्फलत्वादिति समुदायार्थः ॥ ४२ ॥

न तु प्रत्यग्बोधे प्रविशति कदापीन्द्रियगणो
न नीरूपे शब्दे विगतगुणतत्कार्य्यकलने।
प्रवेशो वा योगो भवति करणानां प्रमहसि
भ्रमे सत्ये वैषां गतिरपि यथा स्वाप्नजगति ॥४३॥

अस्तु तर्हीन्द्रियाणामात्मविषयत्वेनैव प्रामाण्यमित्यत आह—ति। प्रत्यग्बोधे विषयविषयिभावविनिर्मुक्ततया सर्वान्तरात्मनि घने कदापि कथञ्चिदपि चक्षुरादीन्द्रियगणो न प्रविशति प्रवेशयो-नैवाप्नोतीत्यर्थः। प्रवेशायोग्यतामेवाह—नेति। नीरूपे रूप-ते, अशब्दे शब्दातीते। एतदुपलक्षणमस्पर्शादेरपि, "अशब्दम-मरूपमव्ययम्" (क० १। ३। १५) इत्यादिश्रुतेः। तत्र हेतुगर्भ-

विशेषणं—विगतगुणतत्कार्यकलने इति। विगतं
गुणानां सत्त्वरजस्तमसां तत्कार्यपञ्चमहाभूतानां
यस्य तस्मिन् प्रमहसि सर्वोत्कृष्टतेजःस्वरूपे सूर्य
करणानां सूर्यादिप्रकाश्यानां चक्षुरादीनां प्रवेशो
नास्तीत्यर्थः। तर्हीन्द्रियाणां प्रामाण्ये का गति
भ्रम इति। भ्रमे देहाद्यध्यासे सत्येव भ्रान्तिदशा
गतिर्यथा स्वप्ने कल्पितवस्तुजातविषये तथा जागरे
अयं भावः—स्वप्नावस्थायां स्वाप्नदेहवत्, विषयवत्
भासिकी सृष्टिर्न शक्यते वक्तुम्, प्रातिभासिकत्वात्
इन्द्रियाणाञ्चातीन्द्रियाणां स्वप्नेऽज्ञातसत्त्वस्य
काणामेवेन्द्रियाणां स्वस्वगोलकेभ्यो निष्क्रम्य स्वा
विषयग्राहकत्वं वक्तुं शक्यते, स्वप्नसमये तेषां व्यापा
श्रवणात्। तथा सत्येव "अत्रायं पुरुषः स्वयंज्योति
१४) इति श्रुतिः सङ्गच्छते। जागरे आदित्यादि
रादिवृत्तिसञ्चाराद्दुर्विवेचमात्मनः स्वयंज्योतिष्ट्व
मधिकृत्य तत्रात्मनः स्वयंज्योतिष्ट्वं प्रतिपादयति।
दुर्विवेचं स्यात्। तथा च स्वप्ने यथा भ्रान्त्यैवेन्द्रि
विषयि भानं तथा जाग्रत्यपि द्रष्टव्यमिति ॥४३॥

यथा स्वप्ने भ्रान्त्येन्द्रियगणकृताऽपि
स्तथाजाग्रद्दृश्ये व्यवहृतिरियं भ्रा
अविद्याकार्य्याणां व्यवहृतिरिहाऽ
प्रमात्वे हेतुत्वं न च करणजन्यस्य

यथा स्वाप्नजगतीत्युक्तं विवृणोति—यथेति।
भ्रान्त्यैवेन्द्रियगणकृतापि व्यवहृतिरस्ति, "न तत्र

४।३।१०) इति श्रुतेः, मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा- न्यायाच्च स्वप्नसृष्टेर्मिथ्यात्वसिद्धिः। अतः प्रातीतिकस्वाप्नपदार्थविषयो व्यवहारो यथा भ्रान्त्यैवेन्द्रियान्वयव्यतिरेकानुविधायी तथा जाग्र- ये जगत्यपि प्रातीतिकत्वाविशेषादियं व्यवहृतिर्व्यवहारोऽपि भ्रान्ति- रूपततया तदनुरूपेन्द्रियगणान्वयव्यतिरेकानुविधायिनीत्यर्थः। प्राती- तिकत्वमेव दर्शयति—अविद्येति। जाग्रत्स्वप्नयोरवान्तरभेदे सत्यपि विषयकत्वाविशेषात् कल्पितैरेव करणैरुभयत्र व्यवहारोऽस्तु न चित् क्षतिरस्तीत्यर्थः। तस्मात्करणजन्यत्वं प्रपञ्चज्ञानस्य प्रमात्वे न भवतीति राद्धान्तः॥ ४४॥

अतो व्योमादीनां प्रकृतिविकृतीनां जनिमता-
मविद्यैवाध्यस्तात्मनि चितिफला कारणमलम् ।
विशेषोपादानं यदपि तदपि स्वप्नवदिदं
ह्यनिर्वाच्यं कार्य्यं जनयति तथा कारणमतः ॥४५॥

फलितमाह—अत इति। यस्मात्प्रतीतिमात्रं सत्त्वं प्रपञ्च- ऽतो व्योमादीनां कार्य्यकारणरूपाणामुत्पत्तिमतां चित्प्रतिबिम्बगर्भा त्मन्यध्यस्ता अविद्यैव कारणमलमत्यन्तासम्भावितप्रदर्शने समर्था। र्थं तर्हि मृद्घटादीनां लोके कार्य्यकारणभावमादाय घटाद्यर्थिनां द्युपादानमित्यपेक्षायामाह—विशेष इति। यदपि विशेषोपादान- विद्याकार्य्यमृदादीनामुपादानं घटादिनिष्पत्तये, तदपि स्वप्नवत् था स्वप्ने कल्पितकुलालेन कल्पितमृदाद्युपादाय कल्पित एव टादी रच्यते तथाऽत्रापि बोद्धव्यमित्यर्थः। "योग्यं योग्येन ध्यद्ध्यते" इति न्यायेनानिर्वाच्यम्, दीति विद्वत्प्रसिद्धम्, कार्य्यं टादिरूपम्, अतस्तथैव कार्य्यानुरूपमेव कारणमविद्याख्यं जनयत्युत्पा- दयतीत्यर्थः॥ ४५॥

ततः शुद्धाद्वैतात्पृथगखिलमाविद्यकमिदं
यतो ज्ञानज्ञेयात्मकजगति विभ्रान्ति
प्रतीतेः सत्त्वं नो पृथगिति विवेकेन वि
जगन्मिथ्या सत्यं सुखनिधि परब्रह्म त

ततः किमित्यत आह—तत इति। शुद्धमविद्य
यदद्वैतं वस्तु ततः पृथक् तस्मिन्नध्यस्तमखिलमाविद्यकं
यतो ज्ञानज्ञेयस्वरूपे जगति विभ्रान्तिनिविडे भ्रमका
विभ्रमरूपायाः पृथग्विलक्षणं सत्त्वं नास्तीति विवे
जगन्मिथ्या स्वाधिष्ठानवृत्तित्रैकालिकाभावप्रतियोगित्व
मिति फलितम्। तदधिष्ठानं परब्रह्म तेनासंस्पृष्टत्व
मेवापरिच्छिन्नमिति सिद्धमित्यर्थः ॥ ४६ ॥

अविद्यायोनित्वं वदसि जगतस्त्वं कथं
न चैकस्माद्धेतोर्बहुविधमिदं कार्य
अदृष्टेशादिभ्यो जगदिदमुदेतीति यदि
किमर्थं मिथ्येयं जडवपुरविद्याऽभ्युप

प्रपञ्चस्याऽऽविद्यकत्वमसहमानः शङ्कते—अविद्यायो
आश्चर्यमेतत्, यद्विचित्ररचनामनुभूयापि जगतोऽविद्या
नह्येकस्मादविचित्रादविद्याख्यात् कारणाद्बहुविधं वि
भवितुं योग्यम्। भो वेदान्तिन्! यद्यदृष्टेश्वरादि
जगदुदेतीति स्वीकरोषि, तर्हि किमर्थं मिथ्यैव
अजागलस्तनायमाना स्वीकृतेति। वदेति शेषः।
कैराग्रहेण वृथा किञ्चिदभ्युपगम्यते। अन्यथा
भज्येतेति भावः ॥४७॥

इह ब्रूमः कार्य्यानुगुणमुचितं कारणमिदं
न कार्य्यं सत्यं स्याद् व्यभिचरति दिक्कालत इदम् ।
न चासत्यं भाति व्यवहृतिदशायां समगितोऽ-
प्यनिर्वाच्यं कार्य्यं तदनुगुणमज्ञानमुचितम् ॥ ४८ ॥

समाधानं प्रतिजानीते—इहेति । अस्मिन् पूर्वपक्षे प्राप्ते सिद्धान्तं । अविद्यायाः प्रपञ्चं प्रति कारणत्वं कथं सिद्ध्यतीत्यपेक्षायां वक्तव्य—कार्य्येति । कार्य्यस्याऽनिर्वाच्यस्याऽनुगुणमेव कारणमिदमविद्या-, कार्य्यं न तावदात्मवत्सत्यम्, यत इदं दिक्कालतो देशकालादिपरि-न व्यभिचरति । न चाऽसत्यं शशशृङ्गादिवत्तुच्छम्, यतो व्यव-दशायामर्थक्रियासमर्थं भाति । न चोभयात्मकम्, विरोधात् । कार्य्यं जगदनिर्वाच्यम्, तदनुगुणं कारणमप्यनिर्वाच्यमज्ञानमेवो-मित्यर्थः ॥ ४८ ॥

श्रुतीनां तात्पर्य्यादपि सुखचिदद्वैतविषये
न सत्यं कार्य्यं स्याज्जगदिदमविद्यादिरचितम् ।
न जायेताऽसत्यं क्वचिदपि विषाणं नृशशयोः
स्वसत्तासम्बन्धो जनिरपि कथं सत्त्वविरहे ॥ ४९ ॥

न केवलकार्य्यानुगुणत्वादेवाऽज्ञानं कारणत्वेन कल्प्यते, अपि तु प्रामाण्यान्यथानुपपत्तेरपीत्याह—श्रुतीनामिति । सुखात्मनि अद्वैते वस्तुनि विषये सर्वासां श्रुतीनां तात्पर्य्यादपि न सत्यं कार्य्यं स्, तस्य सत्यत्वे कथमद्वैतश्रुतीनां प्रामाण्यं स्यात्? तत्तस्माच्छ्रु-प्रामाण्यान्यथानुपपत्तेरपि जगदिदमविद्यातत्कार्य्यकामादिभिर्विचित्रं ग्रथि कल्पितमित्यर्थः । सर्वथा तुच्छत्वमपि नास्ति, कार्य्यत्वव्या-वादित्याह—नेति । असत्यमलीकञ्चेत्कार्य्यं जगत्, न जायेत ।

नहि क्वचिदपि देशे काले वा नरशशयोर्विषाणं शृङ्गं दृष्टं वेति। स्वसत्तासम्बन्धो हि जनिः सर्वथा सत्तां नहि अलीकस्य स्वकारणसम्बन्धनिरूपकत्वं ... वा जन्मलक्षणं सङ्गच्छते। तस्माज्जनिमत्वात् ... वक्तुं न शक्यमित्यर्थः ॥ ४६ ॥

त्रिकालाबाध्यं यत्तदमृतमिदं तर्हि ...
जगज्जायेतेह क्वचिदपि न सता...
न हेतोः साफल्यं तत इदमनिर्वाच्य...
जगज्जन्यत्वं तद् गमयति च माया...

तर्ह्यस्तु सत्यमेवेदं जगत्, नेत्याह—त्रिकाला... कालत्रयेऽप्यबाध्यम्, तदमृतमविनाशि, यथाऽऽत्म... स्यात्, तर्हि न कदाचिदपि जायेत, यत इह सद्वस्तु... न क्वचिदपि देशेकाले वा सम्भवति। नहि सत... वियोगोऽन्यथा सत्यत्वव्याघातापत्तिः स्यात्। ... पक्षे हेतोः कारणस्य तद्व्यापारस्य वा साफल्यम्। ... निर्वक्तुमशक्यत्वाज्जगतो जन्यत्वमेव। तदुक्त... त्यन्ताभावप्रतियोगित्वं मायात्वं मायाकार्यत्वाद... मवगमयतीत्यर्थः। तदुक्तं—

"यथा सतो जनिर्नैवमसतोऽपि जनिर्न च।
जन्यत्वमेव जन्यस्य मायिकत्वसमर्पकम्॥" इ...

न सत्यस्यासत्ये जगति किल हेतुत्व...
विनाऽविद्यां रज्जुर्जनयति न सर्प...

**अतो हेतुः कार्य्यानुगुणमिदमज्ञानमुचितं**
**स्वशक्त्यानन्त्यात्तत्क्षमतममनेकं रचयितुम् ॥ ५१ ॥**

ननु ब्रह्मैव जगतः कारणं किन्न स्यात् ? सन्ति हि ब्रह्मकार्य्यत्व-न्यः श्रुतयः स्मृतयश्च सहस्रशः । तथा च किमनाद्यविद्याकल्प-याशङ्क्याह—नेति । किलेति प्रसिद्धमेतत्, यतः सजातीययोरेव यैकारणभाव इति । विनाऽनाद्यनिर्वाच्यामविद्यां सत्यस्य ब्रह्मणोऽ-ऽनिर्वाच्ये जगति हेतुत्वं श्रुत्युक्तमपि कारणत्वं नोचितम्—न सङ्ग-। नहि रज्जुः स्वावच्छिन्नचैतन्यनिष्ठामविद्यामन्तरेण सर्पादि-नां जनयति । अतो वेदान्तानुकूलतर्केणापि कार्य्यानुगुणमज्ञान-कारणत्वेनोचितम् । न चाऽज्ञानमेकं कथं विचित्रकार्य्यजनकं देति वाच्यम्, तस्यैकत्वेऽपि "इन्द्रो मायाभिः पुरुरूप ईयते" (२।५।१९) इति श्रुत्या स्वशक्त्यानन्त्यादज्ञानशक्तीनामानन्त्यात्तद-नेकमेव जगदनेकविधं विचित्ररचनारूपं रचयितुं स्वाधिष्ठाने कल्प-नक्षमतममत्यन्तसमर्थं "किमज्ञानस्य दुष्करम्" इति न्यायेनेत्यर्थः । नां तन्मूलकस्मृतीनाञ्चाऽद्वितीये ब्रह्मणि तात्पर्यान्न कार्य्यकारणभावे । ऽद्वये वस्तुनि सम्भावनावताराय ब्रह्मणः कारणत्वोक्तिरित्युक्तम-दित्यलम् ॥ ५१ ॥

**अतोऽविद्याध्यस्तं जगदिदमनिर्वाच्यमनृते**
**न चादृष्टादीनामनृतजडमज्ञानकमृते ।**
**क्वचित्स्वातन्त्र्यं तत्कृतजगति तद्द्वारत इमे**
**विकारा अध्यस्ता ह्यविकृतसुखेऽज्ञानशबले ॥ ५२ ॥**

फलितमाह—अत इति । न चादृष्टादीनामनिर्वाच्याज्ञानमन्तरेण स्वकार्य्ये स्वातन्त्र्यम्, किन्तु तत्कृतेऽज्ञानपरिकल्पिते जगति तदज्ञान-

द्वारैवेमेऽदृष्टादयो विकारा जगद्वैचित्र्यनिर्वाहका
विद्वज्जनानुभवप्रसिद्धेऽविकृतसुखे निर्विकारकूटस्थ
ज्ञानशबले मायोपहिते चैतन्येऽध्यस्ताः परिकल्पिताः
इत्यर्थः ॥ ५२ ॥

अविद्याकार्य्यत्वादखिलमिदमाभासम
प्रतीतेः सत्त्वं नो पृथगपि भजेत्स्वाप्नि
नहि स्वप्ने सत्त्वं पृथगनृतमाभासनमृते
चिदध्यस्ताश्वादेर्भवति नयसिद्धं

उक्तं ज्ञातसत्त्वं जगतो निगमयति—अविद्येति
जगदाभासरूपं शुक्तिरजताभासमिवाऽविद्याकार्य्यत्वाद
प्रतीतेः पृथक्सत्त्वं न भजेत् स्वाप्निकप्रपञ्चजालमिव।
प्रतीतिस्वदृतेऽनृतमनिर्वाच्यमाभासनमन्तरेण चिति
पृथक्सत्त्वं नहि भवति। तस्मात्प्रपञ्चस्यानिर्वाच्यत्व
न्यायसिद्धमित्यर्थः ॥ ५३ ॥

जगत्कार्य्यं हेतुः सदचलमिति श्रौतवचनं
प्रधानादेर्हेतोर्जगति च निरासाय भवति
न कार्य्यं नो हेतुः परपदमिति श्रौतवचन
मखण्डे तात्पर्य्यं यत इति मतं वेद विदु

ब्रह्मकारणत्ववादिनीनां श्रुतीनां तात्पर्य्यमाह—
त्कार्य्यं भवति, हेतुः कारणं सद्रूपं ब्रह्म कूटस्थम्, इति श्रौत
परिकल्पितप्रधानपरमाण्वादेः कारणत्वस्य निरासाय
वस्तु परपदं परमात्मतत्त्वमवाङ्मनसगोचरं "तदेव

२ । ५ । १९ ) इति श्रुतिसिद्धं न कार्य्यं कस्यचित्, न वा
दुक्तम्— "अपूर्वानपरं ब्रह्म तस्य कार्य्यं न कारणम् ।
अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते" ॥
त्यतो हेतोः श्रौतवचसां "यतो वा" इत्यादीनां सृष्टिश्रुतीनाम-
ब्रह्मैक्ये तात्पर्य्यं वेदविदुषां व्यासादीनामिति मतं निश्चितमिति
॥ ५४ ॥

**अधिष्ठानाद्भिन्नं क्वचिदपि न चाध्यस्तमखिलं**
**ह्यधिष्ठानं ब्रह्माद्वयमजमविद्यादिशबलम् ।**
**अतो ज्ञानज्ञेयात्मकमखिलमद्वैतममृतं**
**परब्रह्मैवाऽस्तीत्यखिलनिगमान्तैकहृदयम् ॥ ५५ ॥**

द्वन्मतमेव दर्शयति—अधिष्ठानादिति । क्वचिल्लोके वेदे वा
काले वा अखिलमध्यस्तं रज्जुसर्पादिवद्विश्वं स्वाधिष्ठानाद्
भिन्नं न भवति । ननु तर्हि यथायोग्यं मृद्घटादीनां रज्जुसर्पा-
वाधिष्ठानाधिष्ठेयभावः कुतो न स्यात् ? नेत्याह—हीति । यतो
धिष्ठानम्, न मृदादि, न वा रज्ज्वादि, तेषां कल्पितत्वाविशेषात् ।
ल्पितस्य कल्पितमेव अधिष्ठानमस्त्विति वाच्यम्, शून्यवादापत्तेः ।
च्चाधिष्ठानं वाच्यम्, अज्ञातत्वमज्ञानावृतत्वम् । तच्च स्वभानार्हे
व पर्यवस्यति । तथा च सर्वत्राध्यासाधिष्ठानं ब्रह्मैव । तच्चाद्वैत-
मजं जन्मादिविक्रियातीतमविद्याद्युपहितत्वेन रूपेणैवाखिलज
रेत्यर्थः । यतोऽध्यस्तसत्ता अधिष्ठानसत्तानतिरिक्ता, अतो ज्ञानज्ञे-
कमखिलं विश्वं "सर्वं खल्विदं ब्रह्म" ( छा० ३ । १४ । १ )
मैवेदं सर्वम्" ( छा० ७ । २५ । २ ) "नारायण एवेदं सर्वम्"
देवः सर्वम्" (गी० ७ । १९) इति श्रुतिस्मृतिसिद्धं परब्रह्मैवास्तीति
नां सामानाधिकरण्यम्, अत एव "तदनन्यत्वमारम्भणशब्दा-

दिभ्यः" ( अ० सू० २ । १ । १४ ) इत्यत्र तदा... अतो ...
सकाशात्तस्य कार्य्यस्य प्रपञ्चस्यानन्यत्वं नाम ... । य...
भाष्ये भामत्याञ्च "नह्यभेदं प्रतिपादयामः किन्तु ब्रह्मा...
इत्युक्तम् । तथा च ब्रह्मातिरिक्तसत्ताशून्यत्वमेव भवति,
प्रपञ्चसत्ता नान्येति समस्तवेदान्तरहस्यमिदं ॥ तत्त्व...
बुद्धि...

**अतस्तज्ज्ञा ज्ञानं परपदमजं शुद्धम... तथा**
**प्रपश्यन्तो नान्यज्जगदपि हि पश्य... ज...**
**अनात्मज्ञा भिन्नं सकलमिदमध्यस्त... न ते**
**परिच्छिन्ने द्वैतं भ्रमवशत ईक्षन्ते... नि...**

विद्वदविद्वदनुभवयोर्भेदं दर्शयति—अत इति । ... अनि...
सत्ताशून्यमिदं जगद्विचित्रमतस्तज्ज्ञास्तद्ब्रह्म ... शुद्ध...
जानन्तीति । तथा परपदम्, शुद्धं निरतिशयम्, ज्ञानं... जग...
विक्रियाशून्यम्, अमृतं नित्यमुक्तम्, प्रकर्षेणासन्दिग्धं... जगत्प्र...
सन्तोऽन्यत्वेन पुरा कल्पितं जगदपि हि ... 
पश्यन्ति । अनात्मज्ञा देहात्मबुद्धयो भिन्नं ... वैकृतं
विलक्षणं सकलमिदं कल्पितं द्वैतमपरिच्छिन्ने ... ाभिन्
सदित्येवमीक्षन्ते पश्यन्ति, इतरे—स्वयञ्च ... पमि
निनः सन्तः । अतो ज्ञानाज्ञानयोर्महदन्तरमिति... अत

**यथा रज्जुर्भ्रान्त्या भुजगवपुषा भाति... वि**
**तथा भाति भ्रान्त्याऽविकृतमपि ...**
**न रज्जुः सर्पो वा न च जगदिदं ब्रह्म...**
**विबुद्ध्वैवं धीरस्त्यजति जडबुद्धि...**

अतो मुमुक्षुरनात्मज्ञदृष्टिमनादृत्य विद्वद्दृष्टिं समाश्रयेदित्याह— । यथा रज्जुरविकृता सती भ्रान्त्या भुजगाकारेण भाति, तथाऽ- ब्रह्मापि चिद्वस्तु भ्रान्त्या जगदाकारेण । विचारदृष्ट्या न रज्जुः भवति, न च विमलं ब्रह्म जगदिदं भवति । एवं धीरो मुमुक्षुर्विशेषेण तत्त्वं साक्षात्कृत्य, निजधिया स्वरूपाकारवृत्त्या जडबुद्धिं देहा- बुद्धिं त्यजतीत्यर्थः ॥ ५७ ॥

तथा चाज्ञातेऽस्मिन् सुखघनपदे ब्रह्मणि परे
जगद्भानं सर्वा व्यवहृतिरपीहाऽस्तु च मृषा ।
न तेनासङ्गेऽस्मिन् क्षतिरपि मनागस्त्यविकृते
चिदानन्दे विष्णौ स्वत इह विमुक्ते श्रुतिमते ॥ ५८ ॥

अनिर्वाच्याज्ञानपरिकल्पितविश्वं नाधिष्ठानं ब्रह्म स्पृशति, ततश्च शुद्धबुद्धमुक्तस्वभाव ब्रह्मैव कालत्रये वरीवर्त्तीति फलितमाह— चेति । सुखैकरसे ब्रह्मणि परे मायाद्यतीते प्रत्यगभिन्ने अज्ञानोप- जगद्भानमस्तु, सर्वा व्यवहृतिरपि इहाधिष्ठानेऽनिर्वाच्याऽस्तु च । जगत्प्रतिभासेनानिर्वचनीयव्यवहारेण वा अस्मिंश्चिदानन्दे ब्रह्मणि, ा व्यापके, असङ्गे वस्तुतो व्याप्यव्यापकभावासंस्पृष्टे, अत वेकृते सर्वविकारातीते, स्वतो विमुक्ते, श्रुतिसिद्धान्तरहस्ये, इह ाभिन्ने मनागपीषदपि क्षतिरज्ञानतत्कार्य्यसम्पर्करूपहानिर्नास्ति, पमहिम्नैवाज्ञानतत्कार्य्यस्य बाधितत्वादित्यर्थः ॥ ५८ ॥

अतो ब्रह्मज्ञानाच्छ्रवणमननध्यानजनिता-
दविद्याध्यस्ता सा जनिमृतिमयी संसृतिरियम् ।
विनश्येत्तद्धेतौ प्रविलयमिते ज्ञान उदिते
प्रतीचि ब्रह्मैक्ये जयति निजरूपे स्थित इति ॥ ५९ ॥

अज्ञानं तत्कार्य्यं जगद्भ्रमश्च तत्त्वज्ञानं एव भक्ति
बाधते, अतो महता प्रयत्नेन तत्त्वज्ञानमेव सम्पा सक
इति। यतोऽज्ञानकृतेयं संसृतिरतः श्रवणमनननिदिध्यासनवन्तं
ब्रह्मज्ञानात्तस्याः संसृतेर्हेतुभूते उदिते उक्तलक्षणेऽज्ञाने
भावप्रतियोगितया विलयं बाधमिते प्राप्ते सति अविद्या
ज्ञानेनाऽध्यस्ता सा सर्वलोकबुद्धिस्था इयं प्रत्यक्षा
जनिमृतिमयी संसृतिर्विनश्येद्विनश्यतीति सम्बन्धः।
प्रत्यगभिन्ने ब्रह्मैक्ये निजरूपे स्वात्मत्वेनावबुद्धे सति
सर्वोपरि वरीवर्त्ति, कृतकृत्यतया तिष्ठति। इतिशब्दः शास्त्रं
इत्येव सर्ववेदान्तप्रमेयमित्यर्थः ॥ ५९ ॥

अनृतजडविषादाकारमेतत्समस्तं
जगदपि लयमेति प्रत्यगात्मैक्यदृ
दृगपि भवति सा यद्भक्तिलेशेन सम्य
तमहमखिलवन्द्यं कृष्णमेवावलम्बे

इति प्रत्यक्तत्त्वचिन्तामणौ चतुर्थं प्रकरणं सम्पूर्णम्॥

इयं ब्रह्मविद्या भगवद्भक्त्यधीना, "यस्य देवे प
( श्वे० ६ । २३ ), "यमेष वृणुते तेन लभ्यः" ( मु० ३
इत्यादिश्रुतेः। अतः सर्वोपायेन भगवद्भक्तिरेव मुमुक्षु
न तामन्तरेण संसृतेर्निस्तार इत्याशयेन प्रकरणार्थं परिसमा
भगवति समर्पयन्भवन्तं शरण्यत्वेनाऽऽश्रयति—अनृतेति
चादिभिरनुभूयमानं समस्तं जगदपिशब्दात्तन्मूलमज्ञानं
जडविषादाकारमनर्थपुञ्जात्मकं यया प्रत्यगभिन्नब्रह्म
दृष्टया लयं बाधमेति प्राप्नोति, सा परब्रह्मात्मैक्यसाक्षात्कार

भक्तिलेशेन रत्यङ्कुरोत्पत्त्या सम्यग् भवति समुत्पद्यते; तमहं वराको- सकलजगद्वन्द्यं कृष्णं भक्तानामनन्यशरणानां संसारक्लेशहरं वन्तं वासुदेवमेवावलम्बे शरणं व्रजामीति योजना ॥ ६० ॥

दृश्यातिगं परमनन्तमशेषहेतुं
संसारवार्द्धिपरपारमलक्ष्यमूर्तिम् ।
क्रीडन्तमद्भुतपदं व्रजराजसूनुं
वृन्दावने व्रजवधूभिरहं प्रपद्ये ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्द-
विद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभा-
भिधायां प्रत्यगात्मनि संसृतिनिराकरणमयूखाभिधं
चतुर्थं प्रकरणं समाप्तिमगमत् ॥ ४ ॥

---

## अथ पञ्चमं प्रकरणम्

अद्वैतसच्चितिसुखं श्रुतिमौलिगम्यं
विध्वस्तविभ्रममशेषजडावभा[sic]
यत्पादभक्तिरसिकैरवबुद्ध्यतेऽग्र्‍-
स्तं श्रीमुकुन्दमतिभावनयाऽऽश्रये

मात्रादिविश्वमखिलं जडदुःखमिथ्या-
रूपं भ्रमोत्थमपि चेष्टत आविरि...
यत्सत्तया तममृतं निगमैकवेद्यं
श्रीमन्मुकुन्दमनिशं शरणं प्रपद्ये

चतुर्थप्रकरणान्ते "अनृतजडविषादाकारमेवत्समस्तं ... ति प्रत्यगात्मैक्यदृष्ट्या" इत्युक्तं तत्राऽनर्थात्मकं जगत् ... रूपेण स्वस्वरूपप्रत्यगात्मदृष्टिप्रतिबन्धकं प्रत्यगात्मविवेक... तदपगमे संसारानर्थोपशम इत्येतदर्थविचारप्रधानं प्रकर... स्वेष्टदेवतानुसन्धानात्मकं मङ्गलमाचरन्नर्थादभिधेयप्रयोज... अद्वैतेति । तं श्रीमुकुन्दमहमतिभावनया भक्त्युद्रेकेण भ... आश्रये—तदतिरिक्तभावनामनादृत्य तमेव फलभूतमनुसन्द... तं कमित्याकाङ्क्षायामाह—यत्पादेति । यस्य भगवतः पादाम्भोजानुरागाक्रान्तचित्तैः पुरुषधौरेयैरग्रोऽनाद्यवि... विषयिभावरूपद्वैतशून्यं सदबाध्यं चितिरितरनिरपेक्षप्र... ज्ञप्त( प्ति ? )रूपं यत्सुखं ब्रह्मानन्दशब्दवाच्यं तदवबुध्य... यते—इति मुख्यप्रयोजनोक्तिः । तत्केन प्रमाणेनावबुध्यत... श्रुतिमौलिगम्यमिति । वेदान्तप्रमाणैकवेद्यमित्यर्थः । ...

